The Forbes Gujarati Sabhā Series No. 14

# PRABANDHCHINTĀMANI

BY

Shri MERUTUNGACHARYA




EDITED BY

DURGĀSHANKER KEVALRAM SHĀSTRI



BOMBAY

V. S. 1988 A. D. 1932

Price Rs. 1-8-0 [ Copies 500

श्री फार्बस गुजरातीसभा ग्रन्थावलिः अंक १७

श्रीमेरुतुङ्गाचार्यकृतः

# प्रबन्धचिन्तामणिः ।

शास्त्रि-केवलरामात्मजेन दुर्गाशंकरशास्त्रिणा संशोधितः

नवीनं संस्करणम्

प्रतयः ५००

संवदब्दाः १९८८ ] [ शकाब्दाः १८५४

मौल्यम् रु. १॥

# प्रस्तावना.

श्रीप्रबंधचिन्तामणिनाम्नो ग्रन्थस्यास्य जैनधार्मिकदृष्टया यद्विषयप्रयोजनादि तत्प्रथमसंपादकेन स्वकृतप्रस्तावनायां विस्तरतो वर्णितम् । ततः कियानंशोऽग्रे उद्ध्रियते । तत्रोक्तप्रकारेण सत्यपि ग्रन्थस्यास्य परमपुरुषार्थसाधकत्वे ग्रन्थकर्त्रा स्वयमेवोक्तं बुधलोकचित्तरंजनमपि वर्तत एव प्रयोजनान्तरं, परंत्वाधुनिकानां मनसि ग्रन्थोऽयं गूर्जरदेशस्य मध्यकालीनेतिहासस्य साधनभूतत्वेनैव महत्त्वमादधाति ।

ग्रन्थस्यास्यैतिहासिकमूल्यं सविस्तरं निरूपयितुं गूर्जरानुवादस्योपोद्घाते प्रयत्नः कृतः, परमत्रैतावदवश्यं कथ्यते यदद्यावध्युपलब्धैतिहासिकसाधनरूपेषु प्रबन्धेष्वयं प्रबन्धचिन्तामणिः सर्वतोऽधिकविश्वसनीयः । ग्रन्थेऽस्मिन्दृग्गोचरीभूतो मूलराजादिनृपतीनां राज्यकालनिर्देशः प्रायः पुरातत्त्वविद्भिर्विश्वासार्हो गण्यते । तत्तन्नृपैराचरितयुद्धादिकार्यवृत्तान्तोऽपीतिहासस्य नातिदूरे वर्तते । तथापि नायमितिहासः किन्तु प्रबन्ध एव । ग्रन्थकर्त्रा "संप्रदायप्राप्तं" श्रुतमेवात्र संकलितम् । विविधाः प्रबन्धा लोककथारूपाः । लोककथारूपादंशादैतिहासिकोंऽशो विविच्य गूर्जरानुवादस्य टिप्पणीषु परिशिष्टेषु च प्रदर्शितः । ऐतिहासिकतत्त्वस्येयत्ता च तत्रैवोपोद्घाते वर्णिता ।

ऐतिहासिकान्वेषणकार्ये उपयुक्ततामुद्दिश्य समानार्थानां प्रबन्धानां तथा च सुभाषितविषये मूलग्रन्थानामथवा सुभाषितावल्यादिसुभाषितसंग्रहानामुल्लेखाष्टिप्पणीषु प्रदत्ताः ।

ऐतिहासिकटिप्पण्यस्तु गूर्जरानुवादे द्रष्टव्याः ।

ग्रन्थोऽयं वि. सं. १३६१ वर्षे वर्धमानपुरे समाप्तिं गमित इति ग्रन्थसमाप्तौ ग्रन्थकर्त्रा स्वयमेवोक्तम् ।

शुद्धिपत्रकस्यावश्यकतानिराकरणाय यथाशक्ति कृतेऽपि यत्ने न तत्र सफलताऽभूदिति शुद्धिपत्रकं प्रदत्तं तथापीन्द्रियदौर्बल्याद् भ्रमप्रमादादिवशाद्याऽवशिष्टं स्खलितं यद्भवेत्तत्सुधीभिः संशोधनीयमिति प्रार्थयते—

झंडुफार्मसी सयानी रोड, मुम्बई.<br>वि. सं. १९८८<br>अक्षय तृतीया.

शास्त्री केवलरामसूनुः दुर्गाशंकरशर्मा

# ॥ प्रथमसंस्कर्तुः प्रस्तावना ॥

एषोऽञ्जलिः सममसज्जनसज्जनौ तौ वन्दे नितान्तकुटिलप्रगुणस्वभावौ ।
एकं भिया निरभिसंधितवैरिभूतं प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ १ ॥

भक्त्याख्यदशमेनाढ्या रसा नव निरूपिताः ।
अद्भुतोऽङ्गी तदङ्गानि यथास्थानं विभाव्यताम् ॥ २ ॥

ग्रन्थादौ प्रेक्षावतां प्रवृत्त्यर्थं मङ्गलविषयप्रयोजनसंबन्धाधिकारिणस्तथोपोद्घातप्रसङ्गावसराभिधानास्तिस्रः संगतीरपि सप्तभिः पद्यैः प्रबन्धकाराः प्रकटयामासुः । यथा—

आदितीर्थकर्तुर्भगवतश्चतुस्त्रिंशदतिशयानपि चतुर्भिर्मूलातिशयैर्ज्ञापयन्तस्तेन वक्ष्यमाणाः प्रततप्रबन्धा अपि संक्षिप्य वक्ष्याम इति ध्वनयन्तः स्वस्य च तपोगच्छेतरत्वद्योतकं स्वेष्टदेवगुरुनमस्कारात्मकं मङ्गलमादिमध्यावसानेष्वत्र सन्नितमिति सूचयन्त आद्यपद्यमाहुः ।

अथोपलतुल्यकलावच्चन्द्रप्रभशब्दैः पामरविषयिमुमुक्षूणामभव्यवर्जितानां तत्तद्योग्याधिकारप्रबन्धोद्घाटनापदेशोपदेशेन हेयोपादेयतां प्रबोधयन्तो द्वितीयं पद्यं पेठुः । ततोऽत्रानेकप्रबन्धसिन्धून्मथनोत्पन्नपीयूषपरिवेषणदेशीयसुखावबोधप्रयोजनसंयोजनमपि जनयामासुः । तथा परंपराप्राप्तगुरुसंप्रदायादीयमानविवक्षितवस्तुविषयविषयीकृतग्रन्थनामनिवेदनमप्यन्वर्थं समर्थयामासुः । तथैव सहायकधर्मदेवगुणचन्द्रनामग्रहणेन च प्राचीनमहापुरुषचरित्रश्रवणानन्तरासन्नसच्चरितशुश्रूषणाग्रहग्रथितोपायोपेयभावसंबन्धबन्धुरं प्रबन्धचिन्तामणिसंचयं चिक्युः ।

तत्र तावत्सर्वेषु सच्छास्त्रेषु साक्षात्परंपरया वा परमपुरुषार्थसाधनस्य साधीयस्त्वेन निर्देशनं निर्विवादं विश्वेषां विदुषां वचनेषु वर्वर्ति । अत्रभवन्तो भगवन्तः शिष्यशेमुषीनिसर्गसर्गनमेरवोऽपि मेरुतुङ्गाः भस्मीकृतभस्मग्रहणशक्ति सकलजैनीयशास्त्रसिद्धान्तोपनिषद्भूतं प्रबन्धचिन्तामणिनामानं ग्रन्थं जग्रन्थुः ।

तत्र तावदुक्तव्रतेष्वप्यहिंसाव्रतस्यादित्वात्तस्यापि दयामूलत्वाद्दयापि प्राज्यपरदुःखदलनेन दृश्यमानेति निदर्शयन्तः परदुःखभञ्जनबिरुदधारिणः श्रीविक्रमार्कस्य प्रबन्धं प्रथमं बबन्धुः । ततो विशिष्टशिष्टवृष्टिश्रेष्ठत्रिषष्टिशलाकापुरुषा न्तिमाख्य नि-

षण्णतीथतीर्थंकरत्वनिदानमुन्यन्नदानजन्यपूर्वपुण्यप्राग्भारप्रकटितैश्वर्यश्रीमच्छालिवा-हनप्रबन्धसंबन्धं तितनिषवस्तत्प्राग्भवीयक्रान्ततान्तवृत्तान्तकथनगर्भान्तिमातिथिसं-भागव्रतांशप्रभावं प्रकटयन्तस्ततोनुसंदधुर्द्वितीयं महाप्रबन्धम् । इत्थमाद्यन्तव्रतांशसू-चितोचितद्वादशव्रतानां सेतरकष्टानुष्ठानानामपि शीलव्रते सत्येव साफल्यं प्रफुल्लयन्तः श्रीमहाकालमहादेवदत्तमालवदेशकन्यकुब्जेश्वरसंक्षिप्तचरितकथनपूर्वकमृणालवतीमा-यामोहितमुञ्जमहाराजचरितमुदाहरणीभूतमुपन्यस्यन्तो गूर्जरेश्वराग्रगण्यागण्यपुण्यभाजां वनराजादीनां चञ्चचौर्यचटुलचित्तोर्जितार्जितकुलकलङ्ककलितचरितोच्चारणेन चाद-त्तादानब्रह्मचर्योद्भूताद्भुतप्रभावं प्रकाशयांचक्रुः । ससर्प च समाप्तिं प्रथमसर्गोऽप्यत्र ॥

ततश्च प्राप्तपुरुपुरंदरसंपदोऽपि पृथ्वीपतयो मृषावादेन नितरां पराभूतिपदं प्रयान्तीति प्रतिपादयन्तः काशीशकर्णराजभोजराजभीमानां महादानिनां चरितेषु "पराभवे प्रतिज्ञातां प्रणतिमकुर्वतो मालवेशस्य" मालवोऽपि स्थितेरपत्तदिति परिहाररूपामसत्यस्य परां कोटिमुट्टीकयन्तोऽणूनामनणूनां व्रतानां च कर्तव्यतां कीर्तयन्तोऽत्र द्वितीयसर्गान्तं तेनुः ॥

तदनु तेषामपि ( व्रतानामपि ) निश्चलनियतनीतिनियन्त्रणामन्त्रणत्वात्तद्व-द्विद्वन्निष्ठषण्णवतिराजगुणविराजमानसिद्धराजप्रबन्धं चित्रचरित्रं सूत्रयामासुः, सर्ग-स्तृतीयोऽप्यतीतोऽत्र ॥

तदनु नीतिरपि परसत्तानिरपेक्षस्ववशयशौर्यशालिनामेव शीलतीति शीलशौर्य-शालिशीघ्रसमग्रसाहसहसितशतशक्तिसक्तशक्रशक्तिव्यक्तीकृतस्वकृतसुकृतकृतिकृत्य-कुमारपालमहीपालप्रबन्धं धियाध्यक्षधृतमध्यगासिद्धुः, तत्र चतुःसर्गेषु सत्स्वपि समाप्त-श्चतुर्थः सर्गः ॥

तदपि ( शौर्यमपि ) स्वस्वेष्टदेवताढ्ढपर्युपासनयैवेत्युक्तानुक्तकमनीयप्रशं-सनीयपरमार्हतार्हणीयनरचरित्रप्रचितप्रकीर्णकप्रबन्धान्द्रव्यभावभेदभिन्नात्मपरमात्म-पूजाप्रभावाविर्भावान्तांस्तदुपष्टम्भकावान्तरप्रबन्धसहितानपुनरागमनाय पञ्चत्वं प्राप्तानिव पञ्चमसर्गान्तान्प्राहुरिति विस्तरभयात्संक्षिप्ततरापि प्रस्तावना प्राज्ञैः प्रज्ञया प्रकर्षपदवीं दवीयसीमपि प्रापणीयेति प्रार्थना ॥

मुम्बापुरीयसर्वविद्योत्तेजकालये
( यूनिवर्शिटी ) १४-१०-१८८८ ख्रिष्ट.
संवत् १९४४ विजयादशम्याम्

शास्त्री रामचन्द्र दीनानाथ.

## प्रथमसंस्कर्तुः पुस्तकाप्तिमज्ञप्तिपूर्वकस्वकल्पितसंकेतस्वरूपनिरूपणम्



सन्ने १८८५–८६ वर्षे डा. पी. पीटर्सनसाहेबसंगृहीतं नं० ६१७ मुद्रणेच्छाजनकमदृष्टपूर्वं प्राचीनमकृततृतीयलक्षणं प्रबन्धचिन्तामणिपुस्तकं A स्थाने स्थापितम् ॥ १ ॥

तस्यैव द्वितीयावतारमिव पं० रत्नविजयगणिपुस्तकं B स्थाने बोध्यम् ॥२॥ स्वस्यैव नवीनमपि शतधाछिन्नं C स्थाने निवेशितम् ॥ ३ ॥

आनन्दसुरगच्छाधिराजश्रीपूज्यगुणरत्नसूरिप्रीतिप्रेषितमव्यवस्थितस्वादकल्प्यमपि D स्थाने कल्पितम् ॥ ४ ॥

एवमसमग्रसामग्र्यामपि श्राद्धश्रद्धया प्रवर्तिते मुद्रणकार्ये कालातिक्रमे प्रयासशतैः संक्रान्तं विमलोपाश्रयस्थाद्विमलमपि मलधारिणोऽपूर्णं पुस्तकं पुनरपि प्रान्ते पाठान्तरेषु A स्थाने निसृष्टम् । तादृग्विधमपि केवलभगवदिच्छयासं मुम्बापुरीयसुसाइटीस्थं कृपालयफारबससाहेबसंगृहीतं तन्मित्रमिव तत्रैव B स्थाने नियमितम् ॥

यत्र न कोपि संकेतस्तत्र स्वकृतमेवावगन्तव्यं टिप्पणम्.



# वर्तमानसंस्करणविषयेऽऽदर्शादिनिरूपणम्

१ प्रथम संपादकेन A संज्ञया सूचितं पीटर्सनसाहेबसंगृहीतं नं. ६१७ सन १८८४-८६ पुस्तकं भाण्डारकर इन्स्टीटयुटतः समानीय मया पुनरप्यव लोकितं a संज्ञया च निर्दिष्टम्। पाठान्तराणि च मूलपुस्तकादुद्धृतानि।

२ प्रथमसंपादकेन B स्थाने स्थापितं न मया दृष्टं b संज्ञया बहुधा क्वचिच्च प्रमादवशतः B संज्ञयापि निर्दिष्टम्।

३-४ प्रथमसंपादकेन C, D ( अथवा d ) संज्ञाभ्यामुद्धृतानि पाठान्तराणि मयापि तथैव स्थापितानि पुस्तके च न दृष्टे।

५ प्रान्ते A संज्ञया यस्य पाठान्तराणि निर्दिष्टानि तद् विमलोपाश्रयस्थमपि पुस्तकं न मयाऽवलोकितं तस्य पाठान्तराणि च मुद्रितपुस्तकमनु A संज्ञया प्रदत्तानि।

६ फारबससाहेबसंगृहीतं तृतीयप्रकाशपर्यन्तं तदानीं मुम्बापुरीय रो. ए. सोसाइटीस्थमिदानीं च श्रीफार्बसगुजरातीसभायाः संग्रहालयस्थं प्रथमसंपादकेन B संज्ञया निर्दिष्टं मयापि तथैव संज्ञयोल्लिखितमवलोकितमपि।

७ मुम्बापुरीय रो. ए. सोसाइटीस्थं डा. भाउदाजी संग्रहस्थमर्वाचीनमपिशुद्धं संपूर्णं च डा. भाउदाजी शर्मभिः स्वयं संशोधितं वि. सं. १९१५ वर्षे प्राचीन पुस्तकादवतारितं १२४ पृष्ठात्मकं ( प्रत्येकपृष्ठं $11\frac{1}{2}\times6$ inches ) पाठान्तराण्यतः H संज्ञयोद्धृतानि।

८ पुण्यपत्तनस्थभांडारकर इन्स्टीटयूटात्प्राप्तमेकं नं. २४९।१८७३-७४ वर्षीयफुलस्केपपत्रस्थमाधुनिकं सं. १९३० वर्षे लिखितं २४० पृष्ठात्मकं नाति शुद्धं L संज्ञया स्थापितम्।

९ पुनश्च प्रबन्धचिन्तामणिग्रन्थस्यांग्लभाषानुवादकर्त्रा टोनीमहाशयेन इन्डीआआफीसपुस्तकालयस्थबुल्हरहस्तप्रत २९६ संज्ञकादुद्धृतानि a संज्ञया च सूचितानि पाठान्तराणि मया तस्मादेवानुवादात् K संज्ञया संगृहीतानि।

१० सद्गतेन फार्बससाहेबेन प्र. चिं. ग्रन्थस्यांग्लानुवादः १८४९ वर्षे कृतस्तस्यैव हस्ताक्षरैर्लिखितस्तृतीयप्रकाशमारभ्य समाप्तिपर्यन्तः श्रीफार्बसगुजराती

सभासंग्रहालये वर्तते । अस्य मूलपुस्तकमपि संपूर्णं प्रायः शुद्धं पीटर्सन भाउदाजी ( a H ) पुस्तकयोः समकक्षीयं भवेदिति भाति । एतस्माच्च M संज्ञया पाठान्तराणि क्वचित्संगृहीतानि ।

११ पुरातत्त्वविदा श्रीजिनविजयजीमुनिना संपादयितुमारब्धे प्रबन्धचिन्तामणि-ग्रन्थे F संज्ञकादादर्शादवतारितानि पाठान्तराणि दृष्ट्वा ततोऽप्यावश्यकः संग्रहः F संज्ञयैव कृतः ।

श्रीरामचंद्रदीनानाथशास्त्रिणा परेण यत्नेन संपादितं इ. स. १८८८ वर्षे मुद्रितं पुस्तकं P संज्ञया निर्दिष्टम् । मुख्याधारस्थाने च स्थापितम् ।

पूर्वोक्तानामादर्शानां परस्परं तुलनं कृत्वा तत्तदादर्शस्थ पाठानां न्यूनाधिक्यं च दृष्ट्वा यदि विविच्यते तदा ग्रन्थस्यास्योपलभ्यमानादर्शानां संप्रदायद्वैविध्यं दृश्यते । एकः संप्रदायः a संज्ञिते पीटर्सनसंगृहीते नं. ६१७ पुस्तके ( कदाचित् B संज्ञितेऽपि ) समुपलभ्यते । द्वितीयश्च तदितरेषु सर्वेषु । उपलभ्यमानेषु सर्वपुस्तकेषु पश्चात्प्रक्षिप्तोंऽशो वर्तत एव किन्तु a, A, B, C, D F आदर्शेषु प्रक्षिप्तांशस्य बाहुल्यं वर्तते ( दृश्यतां पृ. ९, १३, १४, १९, ४४, ४६, ४८, ५०, इत्यादि । )

ग्रन्थस्यास्य संपादनकार्ये मेरुतुङ्गेन कथितप्रथमादर्शमुपलब्धादर्श-संशोधनद्वारा प्राप्तुं कृतेऽपि प्रयत्नेऽयं ग्रन्थः प्रथमादर्शप्रतिबिम्ब इति वक्तुं न शक्यते । तस्य निकटवर्त्यवश्यं भवेत् । परीक्षकास्तत्र प्रमाणम् ।

---

# अथ विषयसूची

## चतुर्थः प्रकाशः



## पञ्चमः प्रकाशः

इति विषयसूची ।

---



# शुद्धिपत्रकम्

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | ९ | तिघट्ट | निघट्ट |
| २९ | ३ | स्नाता | स्नाताः |
| ३२ | ७ | परितुष्टो | परितुष्टः |
| ३४टि. | ६ | इत्ता | दत्ता |
| ३९ | ७ | बत्तीसडी हियांह | बत्तीस डीहियांह |
| ३६ | १७ | पिक्खि | पिक्खि |
| ४६टि. | ९ | प्रसादे | प्रासादे |
| ,, टि. | १० | भीष्म | ग्रीष्म |
| ९० | ९ | नग्गहं | नग्गुहं |
| ६३टि. | ३ | १४९९ | १८९९ |
| ८१ | २ | ( ७० ) | ( ६८ ) |
| ८४ | २ | जनान् | जवाद् |
| ८८ | १८ | दवतायतन | देवतायतनं |
| ९९ | १३ | धूर्त्तेण | धूर्त्तेण |
| १०३ | ७ | लिङ्गानुशासनसिद्धं | लिङ्गानुशासनासिद्धं |
| १०९ | १५ | कीर्तन | कीर्तनं |
| १०७ | १३ | त्व | त्वं |
| ११३,११६,११८, ११९,१२१,१८२, १८३,१८४,१८६, १८७,१८८,१९४, १९६,१९८,१९९, पृष्ठेषु टिप्पणीषु | | भाउदाजीना स्थाने | भाउदाजिशर्मभिः, इति वाच्यम् |

## शुद्धिपत्रकम्

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२० | १ | परिहइरन् | परिहरन् |
| १३१ | ७ | लीलयव | लीलयैव |
| १५१ | ८ | रिद्दि | रिद्धि |
| १६६ | २ | शालभञ्मिका | शालभञ्जिका |
| १६९ | १६ | पूण | पूर्ण |
| १७३ | १२ | प्रपच्छ | पप्रछ |
| १९३ | २ | निबध्यं | निबध्य |

# શ્રી ફાર્બસ ગુજરાતી સભા—મુંબઈ

## શાળા—પાઠશાળાઓને ઈનામ માટે તેમ પુસ્તકાલયોના સંગ્રહ માટે

### અડધી કિમ્મતની ગોઠવણ

## સાહિત્યપ્રચારને ઉત્તેજનની યોજના

શ્રી ફાર્બસ ગુજરાતી સભાએ, મુંબાઇ ઇલાકાનાં સરકારી, દેશી રાજ્યોનાં તેમ જ મ્યુનીસીપાલીટીઓ અને લોકલ બોર્ડોનાં કેળવણી ખાતાંઓમાં અભ્યાસ તથા વાંચનપ્રસાર દ્વારા તથા વિદ્યાર્થીઓને આપાતાં ઇનામો દ્વારા, તેમ જ તેમના હસ્તકની નિશાળોની તથા સાર્વજનિક લાઇબ્રેરીઓ અને પુસ્તકાલયોમાં ગુજરાતી સાહિત્યના પ્રસાર બહોળા પ્રમાણમાં સહેલાઇથી, ઓછા ખર્ચે થઈ શકે તે માટે પોતાની માલિકીનાં પુસ્તકો ( રાસમાળા ભાગ ૧—૨ સિવાય) અર્ધી કિમ્મતે, ઉપલી સંસ્થાઓને વેચાતાં લેઈ શકવાની અનુકૂલતા કરી આપવાની યોજના કરી છે.

રાસમાળા ભાગ ૧—૨ આ સંસ્થાઓને ૧૨ાા ટકાના કમીશનથી વેચાતી મળશે.

આ યોજનાનો લાભ લેવા તે તે કેળવણી ખાતાં અને સંસ્થાઓ પ્રેરાય તે માટે પોતાની માલિકીનાં પુસ્તકોનો પરિચય તૈયાર કરી પ્રકટ કરેલો છે.

ઉપર જણાવેલી સંસ્થાઓના હસ્તકની શાળા, પાઠશાળાઓમાં ઇનામો આપવા માટે તેમ જ તેમનાં પુસ્તકાલયોમાં તથા અન્ય સાર્વજનિક પુસ્તકાલયોમા સંગ્રહવા માટે, જેમને આ પુસ્તકો અર્ધી કિમ્મતે વેચાતાં લેવાં હોય, તેમણે નીચેને શરનામે પત્રવ્યવહાર કરવો.


**રા. રા. હરસિદ્ધભાઈ વજુભાઈ દિવેટિયા,**

એમ., એ, એલએલ. બી., એડવોકેટ, હાઇકાર્ટ, મુંબઈ.

માનાર્થ મંત્રી, શ્રી ફાર્બસ ગુજરાતી સભા,

મહારાજ, મેન્શન્સ, સેન્ડહર્સ્ટ રોડ, મુંબઈ નં. ૪

श्रीः

# प्रबन्धचिन्तामणिः

॥ ॐ नमः श्रियै ॥ *श्रीस्वामिने नमः ॥

श्रीनाभिभूर्जिनः पातु परमेष्ठी भवान्तकृत्[1] ।
श्रीभारत्यौश्चतुर्द्वारमुचितं यच्चतुर्मुखी ॥ १ ॥

नृणामुपलतुल्यानां यस्य द्रावकरः करः ।
ध्यायामि तं कलावन्तं गुरुं चन्द्रप्रभं प्रभुम् ॥ २ ॥

गुम्फान्विधूय विविधान्सुखबोधाय धीमताम् ।
श्रीमेरुतुङ्गस्तद्ग्रन्थबन्धाद्ग्रन्थं तनोत्यमुम् ॥ ३ ॥

रत्नाकरात्सद्गुरुसंप्रदायात्प्रबन्धचिन्तामणिमुद्दिधीर्षोः ।
श्रीधर्मदेवः शतधोदितेतिवृत्तैश्च साहाय्यमिह व्यधत्त ॥ ४ ॥

श्रीगुणचन्द्रगणेशः प्रबन्धचिन्तामणिं नवं ग्रन्थम् ।
भारतमिवाभिरामं प्रथमादर्शे प्रदर्शितवान् ॥ ५ ॥

भृशं श्रुतत्वान्न कथाः पुराणाः प्रीणन्ति चेतांसि तथा बुधानाम् ।
वृत्तैस्तदासन्नसतां प्रबन्धचिन्तामणिग्रन्थमहं तनोमि ॥ ६ ॥

बुधैः प्रबन्धाः स्वधियोच्यमाना भवन्त्यवश्यं यदि भिन्नभावाः ।
ग्रन्थे तथाप्यत्र सुसंप्रदायाद्दब्धे न चर्चा चतुरैर्विधेया ॥ ७ ॥

---

* श्रीसर्वज्ञाय नमः B. १ श्रीऋषभदेवः २ श्रीभारत्योरिति मुद्रितपुस्तके व्याख्या च टिप्पण्याम् ॥ " मणिरत्नमयसुवर्णमयरौप्यमयदुर्गत्रये समवसरणे चतुर्दिक्षु द्वारस्य विद्यमानत्वाच्छ्रियश्चतुर्द्वारमुचितं चतुस्त्रिंशदतिशयप्रभावात्सर्वाभिमुख्यत्वेनदेशनां कुर्वतस्य तीर्थकरस्य भारत्याश्चतुर्द्वारमुचितं यत्सम्बन्धिनी श्रीभारती च चतुर्मुखी जैनशास्त्रे प्रसिद्धा " ३ ग्रन्थान् A B ४ सद्गुरु B ५ प्रथमोपदेशवृत्तैश्च P श्रीधर्मदेवैः शतधोदितेतिवृत्तैश्च A ६ ऽप्रदर्शितवान् A विनिर्मितवान् B ऽनिर्मितवान् L ७ स्वधियो B ८ सुसंप्रदायारब्धे A सुसंप्रदायदृष्टे B

## १ ॥ अथ विक्रमार्कप्रबन्धः ॥

१ अन्त्यो[1]ऽप्याद्यः समजनि गुणैरेक एवावनीशः
शौर्यौदार्यप्रभृतिभिरिहोर्वीतले विक्रमार्कः ।
श्रोतुः श्रोत्रामृतसवनवत्तस्य राज्ञः प्रबन्धं
संक्षिप्योच्चैर्विपुलमपि तं वच्मि किञ्चित्तदादौ ॥

तथाहि—

अवन्तिदेशे[2] सुप्रतिष्ठाननामनि नगरेऽसमसाहसैकनिधिर्दिव्यलक्षणलक्षितो[3] विक्रमादिगुणैः संपूर्णो[4] विक्रमनामा राजपुत्र आसीत् । स पुनराजन्मदारिद्र्योपद्रुतो[5]ऽप्यतिनीतिपरः सन्परःशतैरप्युपायैरर्थाननुपलभमानः[6] कदाचिद्भट्टमात्रमित्रसहायो[7] रोहणाचलं प्रति प्रतस्थे । तत्र तदासन्ने प्रवरनाम्नि[8] नगरे कुलालस्यालये विश्रम्य प्रभातसमये स भट्टमात्रेण खनित्रं याचितः प्राह । अत्र खनीमध्यमध्यास्य[9] प्रातः पुण्यश्रवणपूर्वं ललाटं करतलेन संस्पृश्य हा दैवमित्युदीरयन्घाते पातिते सति दुर्गतो यथाप्राप्त्या रत्नानि लभते । स वृत्तान्तममुं तस्मात्सम्यगवगम्य विक्रमेण तद्दैन्यं कारयितुमक्षमस्तान्युपकरणानि संहादाय[10] रत्नखननार्थं खनीमध्ये प्रहारोद्यतं विक्रममभिदधे । यत्कश्चिद्[11]वन्त्याः समागतो वैदेशिकः स्वगृहे कुशलोदन्तं पृष्टो भवन्मातुः पञ्चत्वमाचख्यौ । तत्तप्तवज्रसूचीनिभं वचो निशम्य ललाटं करतलेनाहत्य हा दैवमित्युच्चरन् खनित्रं करतलाच्चिक्षेप । तेन खनित्राग्रेण विदारितायां भुवि देदीप्यमानं सपादलक्षमूल्यं रत्नं प्रादुरासीत्[12] । भट्टमात्रस्तदादाय विक्रमेण सह

१ अन्तो B २ अवन्तिदेशे उज्जयिनीपूर्यां B ३ कर्मविक्रमादिगुणैः D. क्रमविक्रमादि B पराक्रमविक्रमादि गुणैः H ४ र्णो भर्तृहरिबन्धुः C ५ द्रुतः परशतैः BH ६ र्थानलभमानः B ७ भट्टमात्रसहायो A B H ८ प्रवरनाम्नि प्रवरनगरे A B L ९ खनीमध्यं प्राप्तः पुण्यश्रवणात्पूर्वं H पुण्यश्रवणात्पूर्वं A पुण्यश्रवणापूर्वं B १० समादाय A H आदाय B ११ तात कश्चित् A H देव कश्चित् B. १२ प्रादुरासीत् । भाग्येन किं न घटते यतः

यद्यपि कृतसुकृतशतः प्रयाति गिरिकन्दरान्तरेषु नरः ।
करकलितदीपकलिका तथापि लक्ष्मीस्तमनुसरति ॥ १ ॥ भट्ट B

प्रत्यावृत्तः । तच्छोकशङ्कुशङ्कापनोदाय खनीवृत्तान्तज्ञापनपूर्वं तत्कालमेव मातुः कुशलमुक्तवान् । विक्रमः सहजां लोलुभतां भट्टमात्रस्य विमृश्य क्रुधा तत्कराद्रत्नमाच्छिद्य पुनः खनीकण्ठे प्राप्तः ।

२ धिग् रोहणं गिरिं दीनदारिद्र्यव्रणरोहणम् ।
दत्ते हा दैवमित्युक्ते रत्नान्यार्थिजनाय यः ॥

इत्युदीर्य सकललोकप्रत्यक्षं तत्रैव तद्रत्नमुत्सृज्य पुनर्देशान्तरं परिभ्राम्यन्नवन्तिपरिसरं प्राप्तः । पटुपटहध्वनिमाकर्ण्य तं वृत्तान्तमवबुध्य च तं छुप्तवान् । तेन समं स राजमन्दिरे समायातः । तस्मिन्नेवापृष्टे मुहूर्ते अहोरात्रप्रमिते राज्ये सचिवैरभिषिक्तो दीर्घदर्शितयेति दध्यौ । यदस्य राज्यस्य प्रबलः कोप्यसुरः सुरो वा क्रुद्धः सम्प्रतिदिनमेकैकं नृपं संहरति नृपाभावे देशविनाशं करोति । अतो भक्त्या वा शक्त्या तदनुनयः समुचित इति नानाविधानि भक्ष्यभोज्यानि निर्माप्य प्रदोषसमये चन्द्रशालायां सर्वमपि सज्जीकृत्य निशारात्रिकावसरानन्तरमङ्गरक्षैर्वृतस्तत्र भारशृङ्खलायां निहितपल्यङ्के निजपट्टदुकूलाच्छादितमुच्छीर्षकं नियोज्य स्वयं प्रदीपच्छायामाश्रित्य कृपाणपाणिर्धैर्यनिर्जितजगत्त्रयो दिगवलोकनपरो यावदास्ते तावन्महानिशीथसमये वातायनद्वारेण प्रथमं धूमं ततो ज्वालां ततः साक्षात्प्रेतपतिरूपमिव करालं वेतालमालोकितवान् । स च बुभुक्षाक्षामकुक्षिस्तानि भोज्यानि यदृच्छयोपभुज्य गन्धद्रव्यैश्च स्वशरीरं विलिप्य ताम्बूलास्वादनेन परितुष्टस्तत्र पल्यङ्के समुपविश्य श्रीविक्रमं प्राह । रे मनुज अहमग्निवेतालनामा देवराजप्रतीहारतया प्रतीतः प्रतिदिनमेकैकं नृपं निहन्मि । किं तु

---

१ शोकापनोदाय A B २ विक्रमस्तदानीं सहजां A ३ व्रणरोपणम् A ४ परिभ्रमन् A B H ५ अवन्तिपरिसरे B D अवन्तिदेशपरिसरे A L ६ लुप्तवान् B ७ राज्ये B ८ यथाशक्त्या भक्त्या वा A B ९ खाद्यानि निर्माय C १० माश्रितः L ११ प्रेतप्रतिरूपमिव B

तवानया भक्त्या[1] प्रीणितेन मयाऽभयदानपूर्वं तव राज्यं प्रदत्तं परमेतावद्भक्ष्यभोज्यानि[2] मम सदैवोपढौकनीयानि । इत्थमुभाभ्यामपि प्रतिपन्ने कियत्यपि गते काले श्रीविक्रमेण राज्ञा निजमायुः पृष्टः । नाहं वेद्मि किंतु स्वामिनं विज्ञाप्य[3] भवन्तं ज्ञापयिष्यामीत्युक्त्वा गतः । पुनरन्यस्यां निशि समेतो महेन्द्रेण संपूर्णशतायुरादिष्ट इति तं जगौ । स राज्ञा मित्रधर्ममधिकमधिरोप्येत्युपरुद्धो[4] यन्महेन्द्रपार्श्वादेकेन हायनेन हीनमधिकं वा वर्षशतं[5] कारयेति । स तदङ्गीकृत्य भूयोऽभ्युपेतः सन्नित्युवाच । महेन्द्रेणापि न नवनवतिर्नैकोत्तरं वर्षशतं भवतीति[6] निर्णये ज्ञाते यावत्परस्मिन्दिने तद्योग्यं भक्ष्यभोज्यादिकं[7] निषिध्य नृपः संग्रामसज्जो भूत्वा निशि तस्थौ । तावत्तत्रैव पूर्वरीत्या समुपागतः[8] स तद्भोज्यादिकमवीक्ष्य राजानमधिचिक्षेप । तयोश्चिरं द्वन्द्वयुद्धे जायमाने सुकृतसहायेन राज्ञा तं पृथ्वीतले पातयित्वा हृदि चरणमारोप्येष्टं दैवतं स्मरेत्यादिष्टः[9] स नृपं जगौ । अमुनाद्भुत[10]साहसेन परितुष्टोऽस्मि यत्कृत्यादेशकारी अग्निवेतालनामाहं तव सिद्धः । एवं निष्कण्टकं तस्य राज्यमजनि । इत्थं तेन राज्ञा पराक्रमाक्रान्तदिग्वलयेन[11] षण्णवतिप्रतिनृपतिमण्डलानि स्वभोगमानिन्ये ।

३ *वन्यो हस्ती स्फटिकघटिते भित्तिभागे स्वबिम्बं

१ अत्यन्तभक्त्या A B H २ मेतद्भक्ष्य A B ३ विज्ञप्य भवन्तं विज्ञपयिष्यामि A विज्ञापयिष्यामि P ४ अधिरोप्याग्रहान्महेन्द्र a अधिरोप्येत्युपरुध्य P A B ५ हीनं वर्षशतं A P ६ भवतीति कथितमिति निर्णये b H ७ भोजनादिकं A B भोज्यादिपाकं P ८ समुपागतः स नृपं जगौ P समुपागतः तद्भोज्यादि A B ९ आदिष्टः सन् अहो अस्य करिघटाविघट्टनैकपञ्चाननस्य महत्साहसं यत्सत्त्वेन किं न ज्ञायते यतः—

सत्त्वैकतानवृत्तीनां प्रतिज्ञातार्थकारिणां ।
प्रभविष्णुर्न देवोपि किं पुनः प्राकृतो जनः ॥
एवं विमृश्य नृपं इत्यधिकः पाठः A आदर्शे

१० तवाद्भुत A B ११ आक्रान्तमण्डलेन C * शार्ङ्गधरपद्धत्यां (१२५०) कस्यापीति प्रदत्तोयं श्लोकः

दृष्ट्वा दूरात्प्रतिगज इति त्वद्द्विषां मन्दिरेषु ।
हत्वा कोषाद्गलितरदनस्तं पुनर्वीक्षमाणो
मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्कं[1] ॥

२ अवन्त्यां[2] पुरि श्रीविक्रमादित्यराज्ञः सुता प्रियङ्गुमञ्जरी। साध्ययनाय वररुचिनाम्नः[3] पण्डितस्य समर्पिता[4] सा प्राज्ञतया सर्वाणि शास्त्राणि तत्पार्श्वे कियद्भिर्वासरैरधीत्य यौवनभरे वर्तमाना जनकं नित्यमाराधयन्ती कदाचिद्वसन्तसमये प्रवर्तमाने गवाक्षे सुखासनासीना मध्यन्दिनप्रस्तावे ललाटन्तपे तपने पथि संचरन्तमुपाध्यायमालोक्य वातायनच्छायासु विश्रान्तं तमुवाच । परिपाकपेशलानि सहकारफलानि दर्शयन्ती तं तल्लोलुभमवबुध्यामूनि फलानि शीतलान्युष्णानि वा तुभ्यं रोचन्त इति तद्वचनचातुरीतत्त्वमनवबुध्य तान्युष्णान्येवाभिलषामीति तेनोक्ते तदुपढौकितवस्त्राञ्चले तिर्यग् तानि मुमोच । भूतलपाताद्रजोवगुण्ठितानि करतलाभ्यामादाय स्वमुखमारुतेन तद्रजोऽपनयन् राजकन्यया सोपहासमभिदधे । किमत्युष्णान्यमूनि वदनवातेन शिशिरीकुरुषे इति तस्याः सोपहासवचसा सामर्षः स द्विजः प्राह । रे विदग्धमानिनि गुरुवितर्कपराया भवत्याः पशुपाल एव पतिरस्तु । इति तच्छापं श्रुत्वा तयोक्तं यस्तव त्रैविद्यस्याप्यधिको विद्यया[5] परमगुरुस्तमेव विवाहयिष्यामीति सा प्रतिज्ञातवती । अथ श्रीविक्रमे तदुचितप्रवरवरचिन्तासमुद्भ्रमभ्रमे स पण्डितः कदाचिदभिलषितवरनिवेदनोत्सुकीकृतराजशासनादरण्यानीमवगाहमानोऽतितृष्णातरलितः[6] सर्वतः सर्वतो[7]मुखाभावात्पशुपालमे-

---

१ साहसाङ्कः A D २ कालिदासाद्यैर्महाकविभिरित्थं संस्तूयमानश्चिरं प्राज्यं राज्यं बुभुजे। सांप्रतमवसरायातां श्रीकालिदासमहाकवेरुत्पत्तिं संक्षेपतो ब्रूमः॥ अवन्त्यां A B ३ वेदगर्भनाम्नः A B H ४ प्रदत्ता B ५ अधिको विद्यतया P अधिकविद्यया a अधिकविद्यतया A B H ६ अतितृषातरलितः B ७ सर्वतो मुर्खाभावात् P

कमालोक्य जलं याचितवान् । तेनापि जलाभावाद्दुग्धं पिबेत्युक्त्वा करवडीं[1] विधेहीत्यभिहिते सर्वेष्वभिधानेष्वभिधानमिदं[2]मश्रुतं[3]माकर्ण्य चिन्ताचान्तस्वान्तः स्वहस्तं तन्मस्तके दत्त्वा महिष्यास्तले निवेश्य करवडीसञ्ज्ञां करतलयुगलयोजनां कारयित्वाकण्ठं पयः पायितः । स तं मस्तके हस्तदानात्करवडीविशेषशब्दज्ञापनाच्च गुरुप्रायं मन्यमानस्तस्याः समुचितपतिमवगम्य महिषीपरिहारात्तं निजं सौधमानीय षण्मासीं यावत्तद्वपुः[4]परिकर्मपूर्वं ॐ नमः शिवायेत्याशीर्वादाध्यापनं कारितः । षड्भिर्मासैस्तस्य तान्यक्षराणि कण्ठपीठस्थितान्यवगम्य शुभे मुहूर्त्ते कृतशृङ्गारः सः पण्डितेन नृपसभां नीतो नृपं प्रति सदभ्यस्तमाशीर्वादं सभाक्षोभवशादुशरटेत्यक्षरैर्जगौ । विसंस्थूलवचसा विस्मितस्य नृपतेरसतीं[5] तच्चातुरीमारोपयितुकामः पण्डितः प्राह ॥

४ उमया सहितो रुद्रः शंकरः शूलपाणिभृत् ।
रक्षतु त्वां महीपाल टंकारबलगर्वितः[6] ॥

इति विदितेन[7] श्लोकेन तत्पाण्डित्यगम्भीरतां वचनविस्तरेण व्याख्यातवान् । तत्प्रत्ययप्रीतेन नृपतिना हि महिषीपालः स्वां पुत्रीं परिणायितः । पण्डितोपदिष्टं सर्वथा मौनमेवालम्बमानो[8] राजकन्यकया तद्वैदग्ध्यजिज्ञासया नवलिखितपुस्तकस्य शोधनायोपरुद्धः । करतले पुस्तकं विन्यस्य तदक्षराणि बिन्दुमात्रारहितानि नखच्छेदिन्या[9] केवलान्येव कुर्वन् राजपुत्र्या मूर्खोयमिति[10] निर्णीतः । ततः प्रभृति जामातृशुद्धिरिति सर्वतः प्रसिद्धिरभूत् । कदाचिच्चित्रभित्तौ महिषीनिवहे दर्शिते सति प्रमोदात्स्वप्रतिष्ठां विस्मृत्य तदाह्वानोचितानि विकृतिवचनान्युच्चरन्महि-

---

१ करचण्डीं A B २ अभिधानेष्विदं a ३ अश्रुतचरं A अश्रुतपूर्वं B ४ वपुः परिकर्मणासहपूर्वं A वपुः परिकर्मणापूर्वं स्वस्तीत्याशीर्वादाध्यापनं B परिकर्मणापूर्वं a D ५ नृपतेर्मनसि तच्चातुरीं B ६ रक्षतात्तव राजेन्द्र टणत्कारकरं यशः A B L ७ निवेदितेन L ८ मेवावलम्बमानो B ९ रहितानि केवलानि b अक्षरच्छेदिन्या a लेखिन्या D १० महिषीपाल एव L P

धीपाल इति तया निश्चिक्ये । स तां तदवज्ञामाकलय्य कालिकां देवीं विद्वत्ताकृते आरराध[1] । पुत्रीवैधव्यभीतेन राज्ञा निशि च्छद्मना दासीं[2] प्रहित्य तवाहं तुष्टास्मीत्यभिधाय यावत्स उत्थाप्यते तावद्विप्लवभीता कालिकैव देवी प्रत्यक्षीभूय तमनुजग्राह । तद्वृत्तान्तावबोधात्प्रमुदितया राजकन्ययात्र तत्रागत्यास्ति कश्चिद्वाग्विशेष इत्यभिहिते स तदैव कालिदासनाम्ना प्रसिद्धः कुमारसंभवप्रभृतिमहाकाव्यत्रयं[3] षट्प्रबन्धान् रचयामास[4] । इति कालिदासोत्पत्तिप्रबन्धः ॥

३ अन्यदा[5] तन्नगरवास्तव्यो दान्ताभिधानश्रेष्ठी सभासंस्थितं विक्रमार्कमुपायनपाणिरुपागत्य प्रणामपूर्वकं विज्ञपयामास । स्वामिन्मया शुभे मुहूर्त्ते प्रधानवर्द्धकिभिर्धवलगृहं कारितं तत्र महतोत्सवेन प्रवेशः कृतः । यावदहं तत्र निशीथे पल्यङ्कस्थितः[6] सुप्तजाग्रदवस्थया तिष्ठामि तावत्पतामीत्याकस्मिकीं गिरं निशम्य भयभ्रान्तो मा पतेत्युदीरयंस्तदैव पलायनमकार्षं । तस्य धवलगृहस्य सम्बन्धे नैमित्तिकैः स्थपतिभिश्च यथावसरमहादानादिभिः[7] सत्कारैर्वृथादण्डित इत्यर्थे देवः प्रमाणं । तमुदन्तं सम्यगवधार्य तदुक्तं तद्धवलगृहमूल्यं लक्षत्रयं तस्मै प्रदाय संध्या[8]सर्वावसरानन्तरं तस्मिन्नात्मीयीकृते सौधे श्रीविक्रमः सुखं प्रसुप्तः । तामेव पतामीति गिरमाकर्ण्यासमसाहसिकतया सत्वरं पतेत्युदीरयन्समीपे पतितं सुवर्णपुरुषं प्राप । इत्थं सुवर्णपुरुषसिद्धिः* ॥

---

१ आराधयितुमुपविष्टः न भुंक्ते दिनाष्टकं जातं पुत्री B २ कालिकानाम्नीं दासीं A B ३ महाकाव्यप्रभृतीन्पद्यबन्धान् H महाकाव्यप्रबन्धान् C कुमारसंभवमेघदूतरघुप्रभृतीन् षट् प्रबन्धान् B ४ रचयामास ॥ इति कालिदासप्रबन्धः ॥ A B इतिकालिदासोत्पत्तिप्रबन्ध इति वाक्यं मुद्रिते नास्ति ५ अथान्यदा C अन्यदा तन्नगरवास्तव्यो दान्ताभिधः H ६ स्थितः पुरुषमेकमवलोक्य B ७ यथावसरं महादानादिभिः सत्कारैश्च वृथाहं दण्डितः a यथावसरमहीनादिभिः P मर्हणादिभिः A B ८ संध्यायां सर्वावसरानन्तरं A B P * इयं कथा सिंहासनद्वात्रिंशिकायामपि वर्तते

४ अथान्यस्मिन्नवसरे कश्चिद्दुर्विधपुरुषः करकृतलोहमयकृशतरदारिद्र्यपुत्रको द्वाःस्थनिवेदितो नृपं प्राह। स्वामिन्भवता नाथेन प्रथितायामवन्त्यां सर्वाण्यपि वस्तूनि सत्वरमत्र विक्रयं यान्ति लभ्यन्ते चेति प्रसिद्धिं बुद्ध्वा चतुरशीतिसंख्येषु चतुःपथेष्वहोरात्रं विक्रयाय दारिद्र्यपुत्रको भ्रामितोऽपि केनापि न गृहीतः। प्रत्युताहं निर्भर्त्सित इति नगर्यां यथावस्थितं कलङ्कं महाराज्ञे विज्ञप्य यथागतं व्रजामीत्यापृच्छन्नस्मि। तदैव तं महान्तं कलङ्कपङ्कं पुर्याः पर्यालोच्य दीनारलक्षं तस्मै प्रदाय नृपस्तं लोहपुत्रकं कोशे निवेशयामास। तस्यामेव निशि प्रथमयामे सुखसुप्तस्य राज्ञः समीपे गजाधिष्ठातृदैवतं द्वितीययामे हयाधिष्ठातृदैवतं तृतीययामे लक्ष्मीश्चाविर्भूय महाराज्ञा दारिद्र्यपुत्रके क्रीते नास्माकमिहावस्थातुमुचितमित्यापृच्छय राज्ञः साहसभङ्गो माभूदित्यनुज्ञातानि तानि जग्मुः। चतुर्थयामे तु कश्चिदुदारपुरुषो दिव्यतेजोमयमूर्त्तिः प्रादुर्भूयाहं सत्त्वनामा भवन्तमाभवं श्रितो गन्तुमापृच्छे इत्युदिते करतलेन नृपः कृपाणिकामादाय यावदात्मघाताय व्यवस्यति तावत्तेनैव करे गृहीत्वा तुष्टोऽस्मीत्यभिधाय स्खलितः। गजाद्यधिष्ठातृणि त्रीणि दैवतानि प्रत्यावृत्य नृपं प्रोचुः। गमनसंकेतव्याघातिना सत्त्वेन विप्रलब्धानां नृपं विहाय नास्माकं गमनमुचितमिति तान्यप्ययत्नं तस्थुः॥ इति विक्रमादित्यसत्त्वप्रबन्धः* ॥

५ अथान्यस्मिन्नवसरे सभास्थितं श्रीविक्रमं सामुद्रिकशास्त्रवेदी कश्चिद्वैदेशिको द्वाःस्थनिवेदितः प्रविश्य नृपलक्षणानि निरीक्षमाणः शिरोधूननपरो नृपेण स विषादकारणं पृष्ट ऊचे। यत्त्वां सर्वापलक्षणनिधिमपि षण्णवतिदेशसाम्राज्यलक्ष्मीं भुञ्जानमवेक्ष्य सामुद्रिकशास्त्रे निर्वेदपरोऽभवं। तत्किमपि कर्बुरान्त्रं न पश्यामि यत्प्रभावेण त्वमपि राज्यं करोषीति तद्वाक्यानन्तरं कृपाणिकामाकृष्य यावदुदरे निधत्ते तावत्तेन किमेतदिति पृष्टः

१ दरिद्रपुत्रको P २ दरिद्रलोहपुत्रकं H ३ राज्याधिष्ठातृ P ४ तान्यप्रयत्नं तस्थुः। * प्रबन्धोऽयं सिं. द्वा. यामपि वर्तते ५ मायाय P

श्रीविक्रमः प्राह । उदरं विदार्य तव तद्विधमन्त्रं दर्शयिष्यामीति वदन्द्वात्रिंशतोऽधिकमिदं सत्वलक्षणं तव नावगतमिति पारितोषिकदानपूर्वकं नृपस्तं विससर्ज ॥ इति [1]सत्त्वपरीक्षाप्रबन्धः ॥

६ अथ कस्मिंश्चिदवसरे परपुर[2]प्रवेशविद्यया निराकृता[3]ः सर्वा अपि विफलाः कला इति निशम्य तदधिगमाय श्रीपर्वते भैरवानन्दयोगिनः समीपे श्रीविक्रमस्तं चिरमार[4]राध । तत्पूर्वसेवकेन केनापि द्विजातिना राज्ञोऽग्रे इति कथितं । यत्त्वया मां विहाय परपुरप्रवेशविद्या गुरोर्नादेया । इत्युपरुद्धो नृपो विद्यादानोद्यतं गुरुं विज्ञपयामास । यत्प्रथममस्मै द्विजाय विद्यां देहि पश्चान्मह्यं । हे राजन्नयं विद्यायाः सर्वथाऽनर्ह इति गुरुणोदिते भूयोभूयस्तव पश्चात्तापो भविष्यतीत्युपदिश्य नृपोपरोधात्तेन विप्राय विद्या प्रदत्ता । ततः प्रत्यावृत्तौ द्वावप्युज्जयिनीं प्राप्य पट्टहस्तिविपत्तिविषण्णं राजलोकमालोक्य परपुरप्रवेशविद्यानुभवनिमित्तं च राजा निजगजशरीरे आत्मानं न्यवेशयत् । तद्यथा—

५ भूपः प्राहरिके द्विजे[5] निजगजस्याङ्गेऽविशद्विद्यया
विप्रो भूपवपुर्विवेश नृपतिः क्रीडाशुकोऽभूत्ततः ।
पल्लीगात्र[6]निवेशितात्मनि नृपे व्यामृश्य देव्या मृतिं
विप्रः कीरमजीवयन्निजतनुं श्रीविक्रमो लब्धवान् ॥
इत्थं विक्रमार्कस्य परपुरप्रवेशविद्या सिद्धा ॥

७ [7]अथान्यस्मिन्नवसरे श्रीविक्रमो राजपाटिकायां व्रजंस्तन्नगरनिवा-

---

१ समाप्तिसूचकमिदं वाक्यं मु. पुस्तके नास्ति २ पुरप्रवेशविधया a b ३ विनाकृताः a b ४ माराध्य C E ५ द्विजन्मनि A ६ पल्लीभृंगनिवेशित B ७ अत्र निम्नावतारितः प्रबन्धोऽधिको दृश्यते B आदर्शे प्रथमावृत्तिपरिशिष्टे ३२८ पृष्ठे च ततोऽत्रोद्धृतः । एकदा नृपो गुरुवन्दनाय गतः तत्र वृद्धं कमपि तपस्विनं पठन्तं वन्दयामास तेन नाशीर्निगदिता पठनव्यग्रेण । राज्ञोक्तं वृद्ध पठन् मुशलं फुल्लावयिष्यसि । तदवगम्य तेन पठित्वा सूरिपदे प्राप्ते तस्यैव राज्ञः सदसि गत्वा मुशलमानाय्यालवालं विधाय श्रीऋषभदेवस्तवेन मुशलं पुष्पयित्वा गतः । तावता सिद्धसेनेनापि तदवगत्य वादाय पृष्ठे गतम् । परेण केतलारसग्रामं व्रजन् वृद्धवादी रुद्धः वादं विधेहि । तेनोक्तं । पुरे गम्यते तत्र—

सिना श्रीसङ्घेनानुगम्यमानं बन्दिवृन्दैः श्रीसर्वज्ञपुत्र इति स्तूयमानं श्रीसिद्धसेनाचार्यमागच्छन्तमवलोक्य सर्वज्ञपुत्र इति वचसा कुपितः । तत्सर्वज्ञतापरीक्षार्थं तस्मै मानसं नमस्कारमकरोत् ।

६ आप्ते दर्शनमागते दशशती संभाषिते चायुतं
यद्वाचा च हसेऽहमाशु भवता लक्षोस्य विश्राण्यताम् ।

---

–सभ्या भवन्ति । पुनः प्रतिवादिनोचे । अत्रैव वादः । अमी गोपाः सभ्याः । तेप्याकारिताः । प्रथमं सिद्धसेनेनोपन्यासो विहितो गीर्वाणवाण्या । तदनु वृद्धवादिना गण्ठीयकं बध्वा गोपकुण्डकं विधाय प्रोचे ॥ नवि मारीयए नवि चोरीयए परदारागमण निवारीयए । थोवावि हु थोवं दईयए इम सग्गि टगमगु जाईयए ॥ ( पद्यमिदं प्रभावकचरिते ( पृ. १०२ ) श्रीवृद्धवादिप्रबन्धे श्लो.१६१. ) एवं पठति गोपा नृत्यन्ति । तैरुक्तमनेन जितं त्वं किमपि न वेत्सि । ततो वृद्धवादिना पुरे गत्वा वादं विधाय जितः शिष्यो बभूव । ततः सिद्धसेनदिवाकरेण गुरुचरणसंवाहनं विधाय मानेन गुरव उक्ताः । यदि यूयमादेशं ददत तदाहमागमं संस्कृतेन करोमि, गुरुभिरुक्तं । तव महत्पापमजनि त्वं गुरुगच्छयोग्यो न गच्छेः । तेनोक्तं, प्रायश्चित्तं ददत । गुरुभिरुक्तं । यत्र जिनधर्मो न तत्र जिनप्रभावनां विधाय पुनः समागन्तव्यमित्यवधूतवेषेण चलितः । द्वादशवर्षाणि यावदन्यत्र परिभ्रम्य तदनन्तरं मालवके गूढमहाकालप्रासादे शिवाभिमुखं चरणौ कृत्वा चरणत्राणौ द्वारकाष्ठे नियोज्य सुप्तः । तत्र वारितोपि तथैव । अत्रान्तरे राज्ञा रक्षिकपुरुषान् प्रेषयित्वोपद्रुतः । तावतान्तः पुरे रवप्रदीपनं लग्नं, राज्ञा समागत्य पृष्टः । कथं शिवस्य न नमस्कारं विदधासि । तेनोक्तं मम नमोऽसौ न सहते । विवेहि । तेन सकललोकसमक्षम्—

प्रशान्तं दर्शनं यस्य सर्वभूताभयप्रदम् ।
माङ्गल्यं च प्रशस्तं च शिवस्तेन विभाव्यते ॥ १ ॥

इति द्वात्रिंशद्द्वात्रिंशतिका कृता, तदा लिङ्गमध्यादवन्तिसुकुमालद्वात्रिंशत्पत्नीकारितप्रासादे श्रीपार्श्वनाथबिम्बं प्रकटीभूतं नमस्कृतं च । असौ सहते नमस्कारं तदाप्रभृति गूढमहाकालोऽजनि । राजा विक्रमार्कः परमजैनोऽभूत् । सिद्धसेनोऽपि स्वगुरुपार्श्वे समेत्य सूरिमन्त्रं प्राप्यैकदोज्जयिन्यामेव चातुर्मासकं स्थितः ॥

१ बन्दिपुत्रैः A P २ आप्ते दर्शनमिति पद्यं A B L H पुस्तकेषु नास्ति किन्तु जैनसिंहासनद्वात्रिंशिकायामुपलभ्यते

निष्काणां परितोषके मम सदा कोटीर्मदाज्ञा परा
कोशाधीश सदेति विक्रमनृपश्चक्रे वदान्यस्थितिम् ॥

सिद्धसेनोऽपि पूर्वगतश्रुतबलेन[1] नृपभावमवगम्य दक्षिणपाणिमुदस्य धर्मलाभाशिषं ददौ। नृपतिनाशीर्वादहेतुं पृष्टः सन्महर्षिस्तव मानसनमस्कारस्याशीर्वादः प्रदीयमानोऽस्तीत्यभिहिते तज्ज्ञानचमत्कृतेन राज्ञा तत्पारितोषिके सुवर्णकोटिर्व्यतीर्यत ॥

८ अथान्यस्मिन्नवसरे राज्ञा कोशाध्यक्षस्तस्मै दापितसुवर्णवृत्तान्तं पृष्टः प्राह । यद्धर्मवहिकायां श्लोकबन्धेन मया सुवर्णदानं निहितम् । तथाहि—

७ धर्म[2]लाभ इति प्रोक्ते दूरादुच्छ्रितपाणये ।
सूरये सिद्धसेनाय ददौ कोटिं नराधिपः[3] ॥

ततः श्रीसिद्धसेनसूरीन्सभायामाकार्य तत्सुवर्णं गृह्यतामिति प्रोक्ते वृथा तृप्तस्य[4] भोजनमित्युच्चारपुरःसरमनेन सुवर्णेन ऋणग्रस्तामवनीमनृणीं कुरु इत्युपदिष्टे तत्सन्तोषपरितुष्टेन राज्ञा तदङ्गीकृतम् ।

८ दिदृक्षु[5]र्भिक्षुरायातस्तिष्ठति द्वारि वारितः ।
हस्तन्यस्तचतुःश्लोको यद्वागच्छतु गच्छतु ॥ १ ॥

९ दीयन्तां दशलक्षाणि शासनानि चतुर्दश ।
हस्तन्यस्तचतुःश्लोको यद्वागच्छतु गच्छतु ॥ २ ॥

१० सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः ।
नारयो लेभिरे पृष्ठिं न वक्षः परयोषितः ॥ ३ ॥

---

१ पूर्वगतबलेन P २ पद्यमिदं जैनसिंहासनद्वात्रिंशिकायां प्रभावकचरिते श्रीवृद्धवादिप्रबन्धे ( श्लो. ६४ ) च वर्तते. कथावल्यां च पद्यस्यास्य प्राकृतरूपं दृश्यते ( अपभ्रंशकाव्यत्रयी पृ.७४ टि. १) ३ धराधिपः B H ४ वृथा भुक्तस्य A B ५ पद्यानि इत आरभ्य 'अष्टौ' पर्यन्तानि न सन्ति A B H पुस्तकेषु
८,१०,१२, पद्यानि प्रभावकचरिते श्रीवृद्धवादिप्रबन्धे वर्तन्ते । तान्येव १४ च भोजप्रबन्धेऽपि । १०,११,१२,१३,१४, पद्यानि सुभाषितावल्यां ( २४५२,

११ सरस्वती स्थिता वक्त्रे लक्ष्मीः करसरोरुहे ।
कीर्तिः किं कुपिता राजन् येन देशान्तरं गता ॥ ४ ॥

१२ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः समभ्येति गुणो याति दिगन्तरम् ॥ ५ ॥

१३ आहते तव निःस्वाने स्फुटितं रिपुहृद्घटैः ।
गलिते तत्प्रियानेत्रे राजंश्चित्रमिदं महत् ॥ ६ ॥

१४ वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ ७ ॥

१५ अष्टौ[1]० ॥ ८ ॥

९ तस्यामेव निशि नृपो वीरचर्यायां पुरि भ्रमन् भूयो भूयस्तैलिकमुखेन पठ्यमानमिदमश्रौषीत् ।

१६ अम्मीणओ सन्देसडओ तारय कन्ह कहिज्ज ।

प्रभातशेषां रजनीमवधीकृत्य तदुत्तरार्द्धमश्रृण्वन्निर्विण्णो नृपः सार्धं प्राप्य निद्रामकरोत् । प्रत्यूषकालेऽवसरकृत्यानन्तरं नृपेण तत्राहूतस्तैलिकस्तदुत्तरार्द्धं पृष्टः ।

जग दालिद्दिहि[2] डुब्बिउं बलिबन्धण ह मुइज्ज ॥

---

२४५,३, २४५५, २४५४,२५९२, एवंक्रमतः) प्रदत्तानि । ८,९,१०,११,१२,१३, जैनसिंहासनद्वात्रिंशिकायामपि । १०,११ शार्ङ्गधरपद्धत्यामपि १४ बाणस्यैवमुल्लिख्य सुभाषितावल्यां हरिश्चन्द्रस्येति च सदुक्तिकर्णामृते । एतत्पद्यं हेमचन्द्रराचिते काव्यानुशासनेऽपि वर्तते

१ अयमग्रे संपूर्णोऽस्ति अत्र मु. पुस्तके प्राकृतगाथाधिकैका वर्तते परं त्वसंबद्धत्वादश्लीलत्वाच्च त्यक्ता २ दालिद्दिहि डुत्थियउ a G दालिद्दिहिं डुच्छिउं D

श्रीसिद्धसेनोपदेशं पुनरुक्तं निर्णीय पृथिवीमनृणां कर्त्तुमारेभे[1]॥

१० अथ मत्सदृशः कोपि जैनो नृपतिर्भावीति पृष्टे श्रीसिद्धसेनसूरिभिरभिदधे—

१७ पुन्ने[2] वाससहस्से सयम्मि वरिसाण नवनवइ अहिए।
होही कुमरनरिन्दो तुह विक्कमराय सारित्थो॥

११ अथान्यस्मिन्नवसरे जगत्यनृणीक्रियमाणे निजौदार्यगुणेनाहंकृतिं दधानः प्रातः कीर्त्तिस्तम्भं कारयिष्यामीति चिन्तयंस्तस्मिन्नेव निशीथे वीरचर्यया चतुष्पथान्तः परिभ्रमन् युद्ध्यमानवृषाभ्यां त्रासितः कस्यापि दारिद्र्योपद्रुतद्विजन्मनो जीर्णवृषभकुटीस्तम्भमध्यारूढो यावत्तिष्ठति ताव-

१ अत्र नृपतिमनोनुसारी पृथ्वीरसप्रबन्धोधिको दृश्यते B आदर्शे मुद्रितपुस्तके ३३० पृष्ठे च ततश्चोद्धृतः—उज्जयिन्यां राजा विक्रमादित्यो भट्टमात्रेण समं महाकाले नाटकालोकनार्थं गुप्तवेषो गतः। कालान्तरितेन नागरिकसुतेन कार्यमाणे नाटके सूत्रधारमुखात्तद्वर्णनं श्रुत्वा राजापि नागरिकद्रव्यग्रहणाय मनसि लोभं कृतवान्। पश्चात्कियत्कालमतिक्रम्य तृषितो मुख्यवेश्यागृहे भट्टमात्रपार्श्वात्पानीयं याचितवान्। तत्र वृद्धवेश्या प्रधानान् पुरुषान् भणित्वा तन्निमित्तमिक्षुरसमादातुमुपवने गता। सूलकैरिक्षुदण्डान् भित्त्वा तयार्धघटेऽप्यसंभृते दुर्मनस्का करकं भृत्वा वेलाविलम्बेनागता राज्ञा इक्षुरसे पीते भट्टमात्रेण वेलाविलम्बदौर्मनस्यकारणं पृष्टा जगाद। अन्यदिने एकेन निर्भिन्नेक्षुदण्डेन सकरको घटो भ्रियते। अद्य घटोपि न संपूरितः। तत्कारणं न ज्ञायते। भट्टमात्रेण (पुनः) पृष्टं यूयमेव परिणतमतयस्तत्तत्कारणं जानीत ततो विचार्य निवेदयन्तु। वेश्यापि वदति। पृथ्वीपतेर्मनः प्रजासु विरुद्धं जातं ततः पृथ्वीरसोऽपि क्षीणो जातः। इति कारणं निवेदितवती। राजापि तद्बुद्धिकौशलाच्चमत्कृतः। स्वभुवनशयनीये सुप्त इति चिन्तितवान्। अकृतेऽपि प्रजापीडने विरुद्धचिन्तामात्रेणापि पृथ्वीरसहानिर्जाता अतः प्रजां न पीडयिष्यामीति कृतनिश्चयो नृप इति परीक्षणार्थं द्वितीयायां निशायां तृषामिषात्तद्गृहे गत्वा शीघ्रमेव सहर्षया तयानीतमिक्षुरसं पीत्वा शयनीये सुप्तवान्। वेश्यापि भट्टमात्रपृष्टा राज्ञः प्रजासु हृष्टं मनो निवेदितवती। राज्ञापि आत्मनिशावृत्तान्तं निवेद्य पुनरपि तस्यै वृद्धवेश्यायै परचित्तोपलक्षणतुष्टेन हारो दत्तः। इति नृपतिमनोनुसारी पृथ्वीरसप्रबन्धः॥ २ पुण्णे

तावेव वृषौ शृङ्गाग्रेण तं स्तम्भं भूयो भूयस्ताडयतः[1] । अत्रान्तरे स विप्रोऽकस्मान्निद्राभङ्गमासाद्याकाशे शुक्रगुरुभ्यां निरुद्धं चन्द्रमण्डलमवलोक्य गृहिणीमुत्थाप्य चन्द्रमण्डलसूचितं तन्नृपतेः प्राणसङ्कटमवगम्य होतव्यद्रव्याणि तदुपशान्तये होमार्थमुपढौकयेति सावधानं नृपे शृण्वति स गृहिण्योचे । अयं नृपः पृथिवीमनृणां कुर्वन्मम कन्यासप्तकस्य विवाहाय द्रव्यमयच्छत्तच्छान्तिकर्मणा कथं व्यसनान्मोचयितुमुचित इति तद्वचसा सर्वथा परिहृतगर्वस्ततत्सङ्कटाच्छुट्टितः कीर्तिस्तम्भं[2] विस्मरन् राज्यं चिरं चकार* ॥

१ ताडयतः। उपरि च फणी पुच्छावलम्बेनाधोभूय कुसुमगन्धिनृपशिरसि दंशाय पुनः पुनः फूत्कुर्वति । अत्रान्तरे B २ कीर्तिस्तम्भवार्ता H

* चकारः—

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्थिवच्छीतलं
पुत्रालिङ्गनवत्तथा च मधुरं बालस्य संजल्पवत् ।
एलोशीरलवङ्गचन्दनलसत्कर्पूरपालीमिल-
त्पाटल्युत्पलकेतकीसुरभितं पानीयमानीयताम् ॥ १ ॥
यदा जीवश्च शुक्रश्च परितश्चन्द्रमण्डलम् ।
परिवेष्टयतस्तद्वै राजा कष्टेन जीवति ॥ २ ॥
इति विक्रमार्कस्य निर्गर्वताप्रबन्धः ॥

अथान्यस्यां निशि ( इत्यादि भोजवृत्तान्ते द्रष्टव्यं, तत्रायं विशेषः ) एका रजकी राज्ञा पृष्टा । वस्त्राणि विरूपाणि कथं ससैकतानि । तयोक्तं—

यासौ दक्षिणदक्षिणार्णववधूरेवाप्रतिस्पर्द्धिनी
गोविन्दप्रियगोकुलाकुलतटी गोदावरी विश्रुता ।
तस्यां देव गतेऽपि मेघसमये स्वच्छं न जातं जलं
त्वद्दण्डद्विरदेन्द्रदन्तमुशलप्रक्षोभितैः पांशुभिः ॥ १ ॥
रजकवधूवचनमिदं श्रुत्वा नरनाथनायकः स ददौ ।
स्वाङ्गपृष्टकसहितं लक्षं भ्रूक्षेपमात्रेण ॥ २ ॥
चौरमागधविप्रेभ्यो रजक्यै कविताश्रुतौ ।
चातुः प्रहरिकं दानं दत्तं विक्रमभूभुजा ॥ ३ ॥

इत्यधिकौ प्रबन्धौ B आदर्शे मुद्रितपुस्तके च परिशिष्टे ३३२ पृष्टे प्रदत्तौ

१८ कट्ठं काउं मुक्कं च साहसं मइलिअं च अप्पाणं ।
अजरामरं न पत्तं हा विक्कम हारिओ जम्मो ॥

१२ कदाचिदायुःप्रान्ते केनाप्यायुर्वेदविदा श्रीविक्रमस्य वपुरपाटवे वायसपिशिताहारेण रोगशान्तिर्भवतीत्युपदिष्टे नृपेण तस्मिन्पाके कार्यमाणे-प्रकृतिव्यत्ययं विमृश्य नृप इति ज्ञापितः। साम्प्रतं धर्मौषधमेव बलवत्। प्रकृतेर्विकृतिरुत्पातः । जीवितलोलुपतया लोकोत्तरां सत्वप्रकृतिमपहाय काकमांसमभिलषन्सर्वथा न जीवसीति वैद्येनाभिहितस्तं पारितोषिकदान-पूर्वं परमार्थबान्धवमिति श्लाघमानो गजतुरगकोशादिसर्वस्वमार्थिभ्यो वितीर्य राजलोकं नगरलोकमापृच्छ्य विजने क्वापि धवलगृहप्रदेशे तत्कालो-चितस्नानदानदेवार्चनपूर्वं[1] दर्भस्रस्तराधिरूढो ब्रह्मद्वारेण प्राणोत्क्रान्तिं करिष्यामीति विमृशन्नकस्मादाविर्भूतमप्सरोगणं स ददर्श। अञ्जलिं बद्ध्वा प्रणामपूर्वं का यूयमिति पृष्टे । न वाग्विस्तरार्होऽयमवसरः । आपृच्छना-र्थैव वयमुपागता इत्यभिधायाप्सरसोऽपसरन्त्यो नृपेण भूयोऽभिदधिरे । न-वीनब्रह्मणा निर्मितानां भवतीनामद्वैतरूपवतीनामेकमेवं[2] रूपं नासया ही-नमिति जिज्ञासुरस्मि । अथ ताः[3] सहस्ततालं विहस्य निजमपराधमस्मासु[3] संभावयसीति ता मौनमाश्रिता नृपेणोचिरे । स्वर्गलोकस्थितासु भवतीषु ममापराधः कथं संभाव्यत इति नृपवचःप्रान्ते तासां मुख्यया[4] सुमुख्या-चचक्षे । राजन्प्राग्पुण्योदयेन साम्प्रतं नवापि निधयस्तव सौधेऽवतेरुस्तद-धिष्ठात्र्यो वयं । भवता देवतारूपेणाजन्मावधि महादानानि ददतैकस्यैव निधेरेतावदेव व्यवकलितं यावत्त्वं नासाग्रं न पश्यसि । इत्थं तदुक्तिमा-कर्ण्य ललाटं करतलेन स्पृशन् यद्यहं नवनिधीन्वेद्मि[5] तदा नवभ्यः पुरुषे-

१ म्लानदान P २ रूपवतीनामेव P २ ता दत्तहस्त A B ता दत्त-स्वहस्त H ३ निजमेवापराधं A B ४ तासु मुख्यया P ताभ्यो मुख्यया B ५ नवनिधीनवतीर्णान्वेद्मि A B H

भ्यस्तान्समर्पयामीति दैवेनाज्ञानभावाद्वञ्चित इत्युच्चरंस्ताभिः कलौ भवानेवोदार इति प्रतिबोधितः परलोकमाप । ततः प्रभृति तस्य विक्रमादित्यस्य जगत्ययमधुनापि संवत्सरः प्रवर्त्तते ॥ श्रीविक्रमार्कस्य दाने विविधा प्रबन्धाः* ॥

---

## २ अथ शालिवाहनप्रबन्धः ॥

१३ अथ दाने विद्वत्तायां च श्रीशातवाहनकथा[1] यथाश्रुता ज्ञेया । तत्पूर्वभवकथा चैवं । श्रीप्रतिष्ठानपुरे[2] शातवाहनभूपो राजपाटिकायां गच्छन्नगरप्रत्यासन्ननद्यां वीचिभिर्नीरतीरक्षिप्तं मत्स्यमेकं हसन्तमालोक्य प्रकृतेर्विकृतिरुत्पात इति भयभ्रान्तो नृपः सर्वानेव विदग्धपुरुषान्सन्देहममुं पृच्छञ्ज्ञानसागरनामानं जैनमुनिं पप्रच्छ । ज्ञानातिशयेन तेन तत्पूर्वभवं विज्ञायेत्युपदिष्टं । यत्पुरातनभवे त्वमस्मिन्नेव पत्तने उच्छिन्नवंशः काष्ठभारवाहनैकवृत्तिस्[3]तस्यामेव नद्यां भोजनावसरे संनिहितशिलातले सक्तूनुपयसालोडय नित्यमश्नासि । कस्मिन्नप्यहनि जैनमुनिं मासोपवासपारणाहेतोः पुरो व्रजन्तमाहूय तं सक्तुपिण्डं तस्मै प्रादात् । तस्य पात्रदानस्यातिशयात्त्वं शातवाहननृपतिरासीः स मुनिर्देवो जातस्तद्देवताधिष्ठानवशात्तं काष्ठभारवाहिनो जीवं त्वां नृपतितयोपलक्ष्य प्रमोदाद्धसितवान् । तत्कथासंग्रहश्चैवं—

---

* वरिसाणि सयच्छक्कतिगसीगदाय जिणन्दवीरस्स । णिव्वाणं सम्पत्ते उव्वण्णो विक्कमो राउ ॥ निर्वाणं प्राप्तस्य जिनेन्द्रवीरस्य त्र्यशीत्यधिकषट्शतानि वर्षाणि गतानि तदा विक्रम उत्पन्नो राजा॥ इति जैनश्रुतपरंपरा टिप्पण्यां प्रथमावृत्तिसंशोधकेनोद्धृता॥

१ शातवाहनराजा प्रबन्धा लिख्यन्ते B २ प्रथमसंस्करणे प्रबन्धान्तरात्शालिवाहनकथा टिप्पण्यामुद्धृता पृ. २४–३१. ३ वृत्तिशब्दाग्रे– ‘अहो कोपि दरिद्राणां दारिद्र्यव्याधिरद्भुतः । घृष्टिक्वाथेऽपि यः पीयमाने न क्षयभूरभूत् ॥ एषोऽधिकः श्लोकः B आदर्शे वर्तते ४ जैनमुनिं दृष्ट्वा पूर्वभवे मया कस्मैचिन्न ददे तस्येदं फलं यदुक्तः—रम्येषु वस्तुषु मनोहरतां गतेषु रे चित्त खेदमुपयासि कथं वृथा त्वं । पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ इत्थं चिन्तयित्वा मुनिमाकार्य तं सक्तुपिण्डं एवं पाठ B आदर्शे ५ शालवाहननृपतिरासीः P

१९) मीनानने प्रहसिते भयभीतमाह श्रीसातवाहनमृषिर्भवतात्र नद्याम् ।
यत्सक्तुभिर्मुनिरकार्यत पारणं प्राक् दैवाद्भवन्तमुपलक्ष्य झषो जहास ॥

स श्रीसातवाहनः पूर्वभववृत्तान्तं जातिस्मृत्या साक्षात्कृत्य ततः प्रभृति दानधर्ममाराधयन् सर्वेषां महाकवीनां विदुषां च संग्रहपरः। चतसृभिः स्वर्णकोटीभिर्गाथाचतुष्टयं क्रीत्वा सप्तशतीगाथाप्रमाणं शालिवाहनाभिधानं संग्रहगाथाकोशं शास्त्रं निर्माप्य नानावदातनिधिः सुचिरं राज्यं चकार । तद्गाथाचतुष्टयं बहुश्रुतेभ्यो ज्ञेयम् ॥

१ इयं कथा इषत्प्रकारान्तरेण प्रबन्धकोशे दृश्यते २ गाथाकोशं K ३ प्रबन्धकोशेप्येवं कथितम् ४ तद्गाथाचतुष्टयमेतद्यथा इत्येवमुक्त्वा निम्नलिखिता दश गाथा a आदर्शे मुद्रित पुस्तके च प्रदत्ताः—

हारो वेणीदण्डो खड्डुग्गलियाइ तह य तालुत्ति ।
एयाइ नवरि सालाहणेण दहकोडि गहियाइ ॥ १ ॥
मग्गं चिय अलहन्तो हारो पीणुंन्नयाण थणयाण ।
उब्बिम्बो भमइ उरे जउणानइफेणपुञ्जु व्व ॥ २ ॥
कसिणुज्जलो य रेहइ वेणीदण्डो नियम्बबिम्बम्मि ।
तह सुन्दरि सुरयमहानिहाणरक्खाभुयङ्गु व्व ॥ ३ ॥
परिओससुन्दराइं सुरए जायन्ति जाइ सुक्खाइं ।
विरहाओ ताइ पियसहि खड्डुग्गलियाइ कीरन्ति ॥ ४ ॥
मा जाण कीर जह चञ्चुलालियं पडइ पक्कमाइन्दं ।
जरढत्तणदुल्लहियं उब्भुयतालाहलं एयं ॥ ५ ॥
ताण पुरोयमरीढं कयलीथम्भाण सरिसपुरिसाण ।
जे अत्तणो विणासं फलाइं दिन्ता न चिन्तन्ति ॥ ६ ॥
जह सरणो तह सुके वि पायवे धरइ अणुदिणं विञ्झो ।
उच्छंगवड्डियं निग्गुणंपि गरूया न छड्डन्ति ॥ ७ ॥
पढमो नेहाहारो तेहिं तिसिएहिं तहं कहवि गहिऊ ।
पिच्छन्ति जं न अन्नं तच्चिय आजम्म मुञ्जारा ॥ ८ ॥

१ मग्गु b c २ पीणुण्ण आणथणआण b c ३ उब्भिम्भो a उव्विग्गो b c ४ परितोससुन्दराइ b सुरएसु लहन्ति जाइ सोक्खाइं ताइच्चिय उण विरहे C d ५ खण्डुग्गिआइ b खड्डुग्गिणिहाइ d ६ पडेइ पक्क b ७ उज्जुयतालाहलं a ८ तहवि कहवि C ९ मुञ्जारो a b c

## ३ ॥ अथ शीलव्रते भूयराजप्रबन्धः ॥ तद्यथा—

१४ †षट्त्रिंशद्ग्रामलक्षप्रमिते कन्यकुब्जे[1] नगरे कल्याणकटके पानीयाधिकृतप्रियाभिलाषव्यतिकराद्राजा भूयदेवो मालवके श्रीरुद्रमहाकालमाराध्य मालवकं तस्मै देवाय दत्त्वा स्वयं तापसोऽभूदिति संक्षेपः ॥

## ४ [ अथ वनराजादिचापोत्कटवंशः ]

१५ तस्य कन्यकुब्जस्यैकदेशो गुर्जरधरित्री तस्यां गुर्जरभुवि वढीयाराभिधानदेशे पञ्चाशरग्रामे चापोत्कटवंश्यं झोलिकासंस्थं बालकं वणनाम्नि[2] वृक्षे निधाय तन्मातेन्धनमवचिनोति । प्रस्तावात्तत्रायातैर्जैनाचार्यैः

सयलजणाणन्दयरो सुक्कस्स वि एस परिमलो जस्स ।
तस्स नवसरसभावम्मि हुज्ज किं चन्दणदुमस्स ॥ ९ ॥
कयलिनरू विञ्झगिरी नेहाहारो य चन्दणद्दुमो य ।
एयाओ नवरि सालाहणेण नवकोडिगहियाओ ॥ १० ॥

† अयं प्रबन्धो निम्नलिखितेन रूपेण B H K आदर्शेषु मुद्रितपुस्तके च परिशिष्टे ३३२ पृष्टे दृश्यते—षट्त्रिंशद्ग्रामलक्षप्रमिते कन्यकुब्जदेशे कल्याणकटकनाम्नि राजधानीनगरे भूराज इति राजा राज्यं कुर्वन् कस्मिंश्चित्प्रभातसमये राजा राजपाटिकायां संचरन्नेकस्मिन्सौधतले वातायनस्थितां कामपि मृगाक्षीं मृगयमाणो निजचित्तापहारापराधिनीं तां जिहीर्षुर्निजं पानीयाद्यधिकृतपुरुषं समादिदेश स च तां नृपसौधे समानीय कस्मिंश्चित्संकेतप्रदेशे स्थापयित्वा नृपं विज्ञपयामास । नृपेण च तत्रागतेन बाहुदण्डे धृता सती भूपमवादीत् । स्वामिन् सर्वदेवतावतारस्य भवतो हन्त कोऽयं नीचनार्याममभिलाषः। ततस्तद्वाक्यामृतेनैषच्छान्तकामानलो नृपः कासीति तां प्रोचे । तयाहं दासीत्यभिहिते किं तथ्यमेतदिति नृपादेशात्प्रभोर्दासः पानीयाधिकृतस्तस्य पत्न्यहं दासानुदासीति तद्वार्त्तयान्तश्चमत्कृतो नृपतिः सर्वथा विलीनकामार्तिः स्वां सुतां मन्यमानो विससर्ज । तस्या वपुषि निजकरौ लग्नाविति विचिन्त्य तन्निग्रहवाञ्छया निशीथे निजैरेव यामिकैर्गवाक्षप्रविष्टनरकरभ्रान्त्या निजावेव भुजौ निग्राहयामास । अथ प्रत्यूषे तान्यामिकान् सचिवैर्निगृह्यमाणान्निवार्य मालवमण्डले महाकालदेवप्रासादे गत्वा स्वयं देवमाराधयंस्तस्थौ । देवादेशाद्भुजद्वये लग्ने सति तं कन्यकुब्जार्धमालवदेशं सान्तःपुरं तस्मै देवाय दत्त्वा तद्रक्षाधिकृतान् परमाराजपुत्रान्नियोज्य स्वयमेव तापसीं दीक्षामङ्गीचक्रे । इति शीलव्रते भूयराजप्रबन्धः ।

१ कन्यकुब्जदेशे कल्याणकटकनामनि राजधानीनगरे H २ वाणनाम्नि A

श्रीशील[1]गुणसूरिनामभिरपराह्णेऽपि तस्य वृक्षस्य छायामनमन्तीमालोक्य झोलिकास्थितस्य तस्यैव बालकस्य पुण्यप्रभावोऽयमिति विमृश्य जिनशासनप्रभावकोऽयं भावीत्याशया वृत्तिदानपूर्वं तन्मातुः पार्श्वात्स बालो जगृहे । वीरमतीगणिन्या[2] स बालः परिपाल्य[3]मानो गुरुभिर्दत्तवनराजाभिधानोऽष्टवार्षिको देवपूजाविनाशकारिणां मूषकाणां रक्षाधिकारे नियुक्तः । स ताँल्लोष्टै[4]र्निघ्नन् गुरुभिर्निषिद्धोऽपि चतुर्थोपायसाध्यांस्तानेवं जगौ । तस्य जातके राजयोगमवधार्यायं महान्नृपतिर्भावीति निर्णीय स मातुः पुनः समर्पितो मात्रा समं कस्यामपि पल्लि[5]भूमौ स्वमातुलस्य चौरवृत्त्या वर्तमानस्य सर्वत्र धाटीप्रपातमकरोत्* ॥

१६ कदाचित् काकरग्रामे खात्रपातनपूर्वं कस्यापि व्यवहारिणो गृहे धनं मुष्णन्दधिभाण्डे करे पतिते सत्यत्र भुक्तोऽहमिति विचिन्त्य तत्सर्वस्वं तत्रैव मुक्त्वा विनिर्ययौ । परस्मिन्नहनि तद्भगिन्या श्रीदेव्या निशि गुप्तवृत्त्या सहोदरवात्सल्यादाहूतः । तया भोज[6]नवस्त्रदानपूर्वकमुपकृतो मम पट्टाभिषेके भवत्यैव भगिन्या तिलकं विधेयमिति प्रतिपेदे ॥

१७ अथान्यस्मिन्नवसरे चरट[7]वृत्त्या वर्तमानस्य चौरैः क्वाप्यरण्यप्रदेशे रुद्धो जम्बा[8]भिधानो वणिक्तं चौरत्रयं दृष्ट्वा[9] बाणपञ्चकमध्याद्बाणद्वयं भञ्जंस्तैः पृष्टे इति प्राह भवत्त्रितयाधिकं बाणद्वयं[10] विफलमित्युक्ते तदुक्तं चलवेध्यं[11] बाणेनाहत्य तैः परितुष्टैरात्मना सह नीतस्तद्यो[12]धविद्याचमत्कृतेन श्रीवनराजेन मम पट्टाभिषेके त्वं महामात्यो भावीत्यादिश्य विसृष्टः ॥

---

१ शीलगणि A शीलगण B २ गणिना A K ३ प्रतिपाल्यमानः B
४ बाणैर्निघ्नन् A B बाणेन a ताञ्छाणेननिघ्नन b c ५ पल्लीभूमौ a c

* अत्र A आदर्शे निम्नलिखितमधिकं–चौरस्वभावे लब्धे न सुखं कदाचिदपि । यतः–
नक्तं दिवा न शयनं प्रकटा न चर्या स्वैरं न चान्नजलवस्त्रकलत्रभोगः । शंकानुजादपि सुतादपि दारतोऽपि लोकस्तथापि कुरुते ननु चौर्यवृत्तिम् ॥ ( पद्यमिदं कविरामचन्द्रकृतकौमुदीमित्राणन्दनाटकस्थं अं. ७ श्लो. ३ )

६ स्नानभोजनवस्त्रदानपूर्वकं A B K भोजनवसुदानपूर्वकं P ७ चौरवृत्त्या A
८ जाम्ब a ९ तेन पृष्टः b १० भवेत् b ११ चलवेध्यं P १२ तद्योधृ A

१८ अथ कन्यकुब्जादायातपञ्चकुलेन तद्देश[1]राज्ञः सुतायाः श्रीमहणिकाभिधानायाः[2] कञ्चुकसम्बन्धे पितृप्रदत्तगूर्जरदेशस्योद्ग्राहणक[3]हेतवे समागतेन सेलभृ[4]द्धनराजाभिधानश्चक्रे । षण्मासीं यावद्देशमुद्ग्राह्य चतुर्विंशतिसंख्यान् रूप्यकद्र[5]म्मलक्षांस्तेजोजात्यांश्चतुःसहस्रसंख्यांस्तुरङ्गमान्गृहीत्वा पुनः स्वदेशं प्रति प्रस्थितं पञ्च[6]कुलं सौराष्ट्राभिधानघाटे वनराजो निहत्य कस्मिन्नपि वननिकुञ्जे तद्राजभयाद्वर्षं यावद्गुप्तवृत्त्या तस्थौ ॥

१९ अथ निजराज्याभिषेकाय नगर[7]निवेशचिकीः शूरां भूमिमवलोकमानः पीपलुलातडागपाल्यां सुखनिषण्णेन भारूयाडसाखडसुतेनाणहिल्लनाम्ना पृष्टः । किमु विलोक्यते । नगरनिवेशयोग्या शूरा भूमिरवलोक्यते इति तैः प्रधानैरभिहिते यदि तस्य नगरनिवेशस्य मम नाम ददत ततस्तां भुवमावेदयामीत्यभिधाय जालिवृक्षसमीपे गत्वा यावती भूः शशकेन[8] श्वात्रासितस्तावतीं भुवं दर्शयामास । तत्राणहिल्लपुरनाम्ना नगरं निवेश्य संवत् ८०२ वर्षे वैशाखसुदि २ सोमे श्रीविक्रमार्कतस्तस्य जालितरोर्मूले धवलगृहं कारयित्वा राज्याभिषेकलग्ने काकरग्रामवास्तव्यां तां प्रतिपन्नभगिनीं श्रीदेवी[9]माहूय तया कृततिलकः श्रीवनराजो राज्याभिषेकं पञ्चाशद्वर्षदेश्यःकारयामास । स जम्बा[10]भिधानो वणिग् महामात्यश्चक्रे । पञ्चासरग्रामतः श्रीशीलगुणसूरीन् सभक्तिकमानीय धवलगृहे निजसिंहासने निवेश्य कृतज्ञचूडामणितया सप्ताङ्गमपि राज्यं तेभ्यः समर्पयंस्तैर्निःस्पृहैर्भूयो निषिद्धः । प्रत्युपकारबुद्ध्या तदादेशाच्छ्रीपार्श्वनाथप्रतिमालंकृतं पञ्चासराभिधानं चैत्यं निजाराधकमूर्त्तिसमेतं च कारयामास । तथा तेन धवलगृह[11]कण्ठे कण्ठेश्वरीप्रासादश्च कारितः ॥

---

१ तादृशराज्ञः P २ महणकाभिधानायाः a b ३ स्योद्ग्राहणकसंबंधहेतवे B ४ सेलभृत् A B ५ पारूषकद्रम्म B H ६ पञ्चकुलशब्दो हर्षचरिते प्राचीनोत्कीर्णलेखेषु च दृश्यते ७ राजधानीनगर B H ८ शशकेनोच्छासिता P ९ श्रियादेवीं P १० जाम्बाभिधानः a ११ धवलगृहे कण्ठेश्वरी A B K

२०) गूर्जराणामिदं राज्यं वनराजात्प्रभृत्यपि ।
जैनैस्तु स्थापितं मन्त्रैस्तद्द्वेषी नैव नन्दति[1] ॥ १ ॥

२० पूर्वं निरुद्धं वर्ष[2] ५९ मास २ दिन २१ श्रीवनराजेन राज्यं कृतं। श्रीवनराजस्य सर्वायुर्वर्ष १०९ मास २ दिन २१। संवत् ८६२ वर्षे आषाढसुदि ३ गुरौ[3] अश्विन्यां सिंहलग्ने वहमाने वनराजसुतस्य श्रीयोगराजस्य राज्याभिषेकस्तस्य त्रयः कुमाराः ॥

२१ अन्यस्मिन्नवसरे क्षेमराजनाम्ना कुमारेण राजेति विज्ञपयांचक्रे । देशान्तरीयस्य राज्ञः प्रवहणानि वात्यावर्त्तेन विपर्यस्तानि। अन्यवेलाकूलेभ्यः श्रीसोमेश्वरपत्तने समागतानि । ततस्तेषु तेजस्वितुरंगमसहस्रं तथा गजानां सार्द्धशती संख्यया[4] परवस्तूनि कोटिसंख्यया। एतावत्सर्वं निजदेशोपरि स्वदेशमध्ये भूत्वा संचरिष्यति । यदि स्वाम्यादिशति तदा तदानीयते इति विज्ञप्तेन राज्ञा तन्निषेधः कृतः। तदनन्तरं तैस्त्रिभिः कुमारै राज्ञो वयोवृद्धभावाद्वैकल्यमाकल्य तस्यामपि स्वदेशप्रान्तभूमौ सैन्यं सज्जीकृत्याज्ञातचौरवृत्त्या तत्सर्वमाच्छिद्य स्वपितुरुपनिन्ये । अन्तः कुपितेन मौनावलम्बिना राज्ञा न किमपि तेषां प्रतिपत्त्यादि[5] कृतं । तत्सर्वं नृपतिसात्कृत्वा क्षेमराजकुमारेणैतत्कार्यं सुन्दरं कृतमसुन्दरं वेति विज्ञप्तो नृपतिर्बभाषे । यदि सुन्दरमुच्यते परस्वलुण्टनपातकं यद्यसुन्दरमभिधीयते तदा भवदीयचेतसो विरक्तिः । अतो मौनमेव श्रेय इति सिद्धं । श्रूयतां भवदीयप्रथमप्रश्ने परवित्तापत्तौ निषेधहेतुः । यदा परमण्डलेषु नृपतयः सर्वेषामपि राज्ञां राज्यप्रशंसां कुर्वन्ति तदा गुर्जरदेशे चरटराज्यमित्युपहसन्ति । अस्मत्स्थानपुरुषै[6]रित्यादिस्वरूपं विज्ञप्तिकया ज्ञाप्यमानाः किञ्चिन्निजपूर्वजवैमनस्यमावहन्तो दूयामहे । यद्ययं पूर्वजकलङ्कः सर्वलोकहृदये विस्मृतिमावहति तदा समस्तराजपङ्क्तिषु वयमपि राजशब्दं लभामहे ।

१ तन्न नन्दति B H २ पूर्वं वर्ष ६० श्रीवनराजेन B संवत् ८०२ पूर्वं वर्ष ६० श्री वनराजेन राज्यं कृतं । संवत् ८६२ वर्षे श्रीयोगराजस्य राज्याभिषेकः इत्येवं पाठः L आदर्शे. ३ शुद्ध १३ A B ४ सार्द्धघटासंख्ययारूपं H सार्द्धशत b सिद्धघटा रू. १८ b ५ प्रत्यादिष्टं B H ६ अस्मत्पुरुषैः P

धनलवलोलुभैर्भवद्भिः स पूर्वजकलङ्क उत्सृज्य[1] पुनर्नवीकृतः । तदनन्तरं राज्ञा शस्त्रागारान्निजं धनुरुपानीय यो भवत्सु बलवान् स इदमारोपयत्विति समादिष्टे सर्वाभिसारेण तन्नैकेनाप्यधिरोप्यत इति राज्ञा हेलयैवाधिज्यीकृत्याभिदधे[2]—

२१) आज्ञाभङ्गो[4] नरेन्द्राणां वृत्तिच्छेदोऽनुजीविनाम्[3] ।
पृथक्शय्या च नारीणामशस्त्रो वध उच्यते ॥

इति नीतिशास्त्रोपदेशादस्मास्वशस्त्रवधकारिषु पुत्रेषु को दण्ड उचितः । अतो राज्ञा प्रायोपवेशनपूर्वकं विंशत्यधिकवर्षशते पूर्णे चिताप्रवेशः कृतः । अनेन राज्ञा भट्टारिकाश्रीयोगीश्वरीप्रासादः कृतः ।

**२२** अनेन राज्ञा वर्षाणि ३९ राज्यं कृतं । सं. ८९७ पूर्वं वर्ष २५ श्री क्षेमराजेन राज्यं कृतं । सं. ९२२ पूर्वं वर्ष २९ श्रीभूयडेन राज्यं कृतं । अनेन श्रीपत्तने श्रीभूयडेश्वरप्रासादः कारितः । सं. ९५१ पूर्वं श्रीवैरिसिंहेन ( श्रीवीरसिंहेन B ) वर्षाणि २५ राज्यं कृतं । सं. ९७६ पूर्वं वर्ष १९ श्री रत्नादित्येन राज्यं कृतं । सं. ९९१ पूर्वं वर्षाणि ७ श्रीसामन्तसिंहेन राज्यं कृतं । एवं चापोत्कटवंशे सप्त नृपतयोऽभूवन् विक्रमकालतः संख्यया वर्षाणि ९९८* ॥

---

१ उन्मृज्य a B H K २ वाधिज्यं विदधे H ३ द्विजन्मनाम् A B H ४ दाज्ञाभङ्गात् a K

* मुद्रितपुस्तके a आदर्शानुसारी निम्नलिखितः पाठः । संव० ८७८ श्रावणसुदि ४ निरुद्धं वर्ष १७ मास १ दिन १ श्रीयोगराजेन राज्यं कृतं ॥ सं० ८७८ ! श्रावणसुदि ५ उत्तराषाढनक्षत्रे धनुर्लग्ने रत्नादित्यस्य राज्याभिषेको बभूव । सं० ८८१ कार्तिकसुदि ९ निरुद्धं वर्ष ३ मास ३ दिनान्यनेन राज्ञा राज्यं चक्रे ॥ सं० ८९८ ! वर्षे ज्येष्ठसुदि १३ शनौ हस्तनक्षत्रे सिंहलग्ने श्रीक्षेमराजदेवस्य राज्याभिषेकः समजनि । सं० ९२२ ! भाद्रपदसुदि १५ रवौ वर्ष ३८ ! मास ३ दिन १० अस्य राज्ञो राज्यनिबन्धः । ५ । सं० ९३५ ! वर्ष आश्विनसुदि १ सोमे रोहिणीनक्षत्रे कुम्भलग्ने श्रीचामुण्डराजदेवस्य पट्टाभिषेकः समजनि ॥ ६ ॥ सं० ९३८ माघवदि ! ३ सोमे निरुद्धं वर्ष १३ । मास ४ दिन १६ अनेन राज्ञा राज्यं विदधे ॥ सं० ९३८ ! माघवदि १४ भौमे स्वातिनक्षत्रे सिंहलग्ने श्रीआकडदेवो राज्ये उपविष्टः । अनेन

## ५ [ ॥ अथ मूलराजप्रबन्धः ॥ ]

२२) असेव्या मातङ्गाः परिगलितपक्षाः शिखरिणो
जडप्रीतिः कूर्मो फणिपतिरयं च द्विरसनः ।
इति ध्यातुर्धातुर्धरणिधृतये सान्ध्यचुलका—
त्समुत्तस्थौ कश्चिद्विलसदसिपट्टः सुसुभटः ॥ इति ॥

२३ अथ पूर्वोक्तश्रीभूयडराजवंशे मुञ्जालदेवसुता राजबीजदण्डकनामानस्त्रयः सहोदरा यात्रायां श्रीसोमनाथं नमस्कृत्य ततः प्रत्यावृत्ताः । श्रीसामन्तसिंहदेवनृपं वाहकेल्यामवलोकमानास्तुरगस्य नृपेण कशाघाते दत्ते सति कार्पटिकवेषधारी राजनामा क्षत्रियोऽनवसरे दत्तेन तेन कशाघातेन पीडितः शिरःकम्पपूर्वं हाहेति शब्दमवादीत् । राज्ञा तत्कारणं पृष्टः स तुरङ्गमेन कृतं गतिविशेषं न्युञ्छनयोग्यमनवधार्य कशाघाते दीयमाने ममैव मर्माघातः समजनि । तेन तद्वचसा चमत्कृतेन राज्ञा तुरङ्गो वाहनाय समर्पितस्तस्यैव । अश्वाश्ववारयोः सदृशयोगमालोक्य पदे पदे तयोर्न्युञ्छनानि कुर्वंस्तेनैव तदाचारेण तस्य महत्कुलमाकलय्य लीलादेवीनाम्नीं स्वभगिनीं ददौ । आधानानन्तरं कियत्यपि गते कालेऽकाण्डमरणे संजाते सचिवैरपत्यमरणं पर्यालोच्य तदुदरविदारणपूर्वमपत्यमुद्धृतं । मूलनक्षत्रजातत्वात्स श्रीमूलराजाभिधया समजनि । बालार्क इव तेजोमयत्वात्सर्ववल्लभतया पराक्रमेण मातुलमहीपालं प्रवर्द्धमानसाम्राज्यं कुर्वन् मदमत्तेन श्रीसामन्तसिंहेन साम्राज्येऽभिषिच्यते

कर्करायां पूर्यामाकडेश्वरकण्टेश्वरीप्रासादौ कारितौ । सं०९६५! पौषशुदि ९ बुधे निरुद्धं वर्ष २६! मास १ दिन २० राज्यं कृतं ॥ सं०९९० ! पौषसुदि १० गुरौ आर्द्रानक्षत्रे कुम्भलग्ने भूयगडदेवः पट्टे समुपविष्टः । अनेन राज्ञा भूयगडेश्वरप्रासादः कृतः श्रीपत्तने प्राकारश्च सं० ९९१! वर्षे आषाढसुदि १५ निरुद्ध वर्ष २७! मास ६ दिन ५ राज्यं कृतं एवं चापोत्कटवंशे पुरुषाः ७ तद्वंशे १९० वर्ष मास २ दिनसप्त राज्यं जातं ॥

१ पूर्वोक्त श्रीभूयडराजवंशे राजबीजदण्डनामानस्त्रयः पुत्राः सहोदरा यात्रायां श्रीसोमनाथं नमस्कृत्य ततः प्रत्यावृत्त्य श्रीमदणहिल्लपुरे श्रीसामन्तसिंहनृपं वाहकेल्यां A B H K २ भूयड a P ३ योग्यता K ४ श्री भूयडदेवेन a P

त्वमत्तेनोत्थाप्यते च तदादि चापोत्कटानां दानमुपहासप्रसिद्धम्। स इत्थमनुदिनं विडम्ब्यमानो निजपरिकरं सज्जीकृत्य विकलेन मातुलेन स्थापितो राज्ये तं निहत्य सत्य एव भूपतिर्बभूव ॥ [1]सं० ९९८ वर्षे श्रीमूलराजस्य राज्याभिषेको निष्पन्नः ॥

२४ [2]कस्मिन्नप्यवसरे सपादलक्षीयक्षितिपतिः श्रीमूलराजमभिषेण[3]यितुं गूर्जरदेश[4]संनिधौ समाजगाम । तद्यौगपद्येन नरपतेस्तिलङ्गदेशीयराज्ञो बा[5]रपनामा सेनापतिरुपाययौ । श्रीमूलराजेन तयोरेकस्मिन्विगृह्यमाणेऽपरः पार्ष्णिघातं कुरुत इति सचिवैः सह विमृशंस्तैरूचे । श्रीकन्थादुर्गे प्रविश्य कियन्त्यपि दिनान्यतिवाह्यन्ते । नवरात्रिकेषु समागतेषु सपादलक्षक्षितिपतिः स्वराजधान्यां शाकंभर्यामेव स्वगोत्रजामाराधयिष्यति । तस्मिन्नवसरे श्रीबारपनामा सेनानीर्जीयते । तदनु क्रमतः सपादलक्षक्षोणीपतिरपीत्थं तदीये मन्त्रे श्रुते सति नृपः प्राह । मम लोके पलायनापवादः किं न भविष्यतीत्यादिष्टे ते ऊचुः—

२३)यदपसरति मेषः कारणं तत्प्रहर्तुं मृगपतिर[6]पि कोपात्संकुचत्युत्पतिष्णुः।
[7]हृदयनिहितवैरा गूढमन्त्रप्रचाराः किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥

इति तद्वचसा श्रीमूलराजः श्रीकन्थादुर्गे प्रविवेश । श्रीसपादलक्षीयभूपतिः श्रीगूर्जरदेशे वर्षाकालमतिक्रामन्नवरात्रेषु समागतेषु तस्यामेव कटकभूमौ शाकम्भरीनगरं निवेश्य तत्र गोत्रजामानीय तत्रैव नवरात्राणि प्रारेभे । श्रीमूलराजस्तत्स्वरूपमवगम्य निरुपायान्मन्त्रिणो ज्ञात्वा तत्कालोत्पन्नमतिवैभवो राज[8]लाहणिकां प्रारभ्य राजादेशेन समस्तान्समन्ततः

---

१ सं. ९९३ वर्षे आषाढसुदि १५ गुरौ, अश्विनीनक्षत्रे सिंहलग्ने रात्रिप्रहरद्वयसमये जन्मत एकविंशतितमे वर्षे श्रीमूलराजस्य राज्याभिषेकः समजनि । इति मु पुस्तके पाठः ॥ २ मूलार्कः श्रूयते शास्त्रे सर्वकल्याणकारकः। अधुना मूलराजेन योगश्चित्रं प्रशस्यते ॥ इत्यादि स्तुतिभिः स्तूयमानः साम्राज्यं कुर्वन्नास्ते तस्मिन्नवसरे । A B H आदर्शेष्वेवंपाठः ( मूलार्क इत्यादि श्लोकः सिद्धहैमप्रशस्तिगतः श्लो. ६) ३ पराजेतुं A ४ देशसन्धौ P ५ बारवनामा P श्रीबारव P ६ रतिकोपात a ७ पद्यमिदं पञ्चतन्त्रे दृश्यते ८ लिहिणिकां a राजा लिहणिकां P

सामन्तानाहूय[1] कूटलेखकव्ययकरणप्रतिबद्धपञ्चकुलमुखेन सर्वानपि राजपुत्रान्पदातींश्चान्वयावदाताभ्यामुपलक्ष्य यथोचितदानादिभिरावर्ज्य च समयसंकेतज्ञापनापूर्वं[2] तान्सर्वान्सपादलक्षीयनृपतिशिबिरसंनिहितान्विधाय निर्णीते वासरे प्रधानकरभीमारुह्य तत्प्रतिपालकेन समं भूयसीमपि भुवमाक्रम्य प्रत्यूषकाले[3]ऽतर्कित एव सपादलक्षीयनृपतेः कटकं प्रविश्य कराभ्या अवरुह्य[4] कृपाणपाणिरेकाक्येव श्रीमूलराजस्तद्दौवारिकमभिहितवान् । साम्प्रतं नृपतेः कः समयः श्रीमूलराजो राजद्वारे प्रविशतीति स्वस्वामिने विज्ञापयेति वदंस्तं दोर्दण्डप्रहारेण द्वारदेशादपसार्यायं श्रीमूलराज एव द्वारे प्रविशतीति तस्मिन्नभिदधाने गुरूदरान्तः प्रविश्य तस्य राज्ञः पल्यङ्के स्वयं निषसाद । भयभ्रान्तः स राजा क्षणमेकं मौनमवलम्ब्येषत्साध्वसं विधूय भवानेव श्रीमूलराज इत्यभिहिते श्रीमूलराजः स्पष्टं जगौ ॐ इति । गिरमाकर्ण्य यावत्समयोचितं किञ्चिद्वक्ति तावत्पूर्वसंकेतितैस्तैश्चतुःसहस्रप्रमितैः पत्तिभिः स गुरूदरः परिवेष्टयांचक्रे । अथ मूलराजेन स नृप इत्यभिदधे । अस्मिन्भूवलये नृपतिः समरवीरः समरे यो मम सम्मुखस्तिष्ठति स कोऽपि नास्त्यस्ति वेति मम विमृशतस्त्वमुपयाचितै[5]रुपस्थितोऽसि । परमशनावसरे मक्षिकासन्निपात इव तिलङ्गदेशीयतैलपाभिधानराज्ञः सेनापतिं मज्जयाय समागतं यावच्छिक्षयामि तावत्त्वया पार्ष्णिघातादिव्यापाररहितेन स्थातव्यमिति त्वामुपरोद्धुमहमागतोऽस्मि । मूलराजेनेत्यभिहिते भूपतिरेवमवादीत् । यत्त्वं नृपतिरपि सामान्यपत्तिरिव जीवितनिरपेक्षतयेत्थं वैरिगृहे एक एव प्रविशसि तेन त्वया सार्धमाजीवितान्तमेव मे सन्धिः । तेन राज्ञेत्युदिते मा मैवं वदेति तं निवारयंस्तेन भोजनाय निमन्त्रितोऽवज्ञया तं निषिध्य करे तरवारिमादायोत्थितः । तां करभीमारुह्य[6] तेन स्कन्धावारेण परिवेष्टितो बारप[7]-

१ सामन्तानाकार्य क्षूणलेखेन व्ययकरण B H K २ ज्ञापनपूर्वं A ज्ञापनपूर्वकं H ३ प्रदोषकाले A H ४ करभ्यामेव C d करभ्यामवरुह्य b ५ मुपयाचितशतै A B H ६ मधिरुह्य B ७ बारव a P

सेनापतिकटके पतितः । तं निहत्य दशसहस्रसंख्यांस्तद्वाजिनोऽष्टादशगजरूपाणि चादाय यावदावासान् दत्ते तावत्प्रणिधिभिरस्मिन्वृत्तान्ते ज्ञापिते सपादलक्षः[1] पलायांचक्रे ॥

२८ तेन राज्ञा श्रीपत्तने श्रीमूलराजवसहिका कारिता । श्रीमूलदेवस्वामिनः[2] प्रासादश्च । तथा नित्यं नित्यं सोमवासरे श्रीसोमेश्वरपत्तने[3] यात्रायां शिवभक्त्यां[4] व्रजंस्तद्भक्तिपरितुष्टः सोमनाथ उपदेशदानपूर्वं मण्डलीनगरमागतः[5] । तेन राज्ञा तत्र मूलेश्वर इति प्रासादः कारितः । तत्र नर्माश्विकीर्षाहर्षेण प्रतिदिनमागच्छतस्तस्य तद्भक्तिपरितुष्टः श्रीसोमेश्वरः ससागर एव भवन्नगरे समेष्यामीत्यभिधाय श्रीमदणहिल्लपुरेऽवतारमकरोत् । समागतसागरसंकेतेन सर्वेष्वपि जलाशयेषु सर्वाण्यपि वारीणि क्षाराण्यभवन् । तेन राज्ञा तत्र त्रिपुरुषप्रासादः कारितः । अथ तस्य चिन्तायकमुचितं तपस्विनं कञ्चिदालोकमानः सरस्वतीसरित्तीरे एकान्तरोपवासपारणकेऽनिर्दिष्टपञ्चग्रासभिक्षाहारं कन्थडिनामानं[6] स तपस्विनमश्रौषीत् । यावत्तन्नमस्याहेतवे नृपतिस्तत्र प्रयाति तावत्तेन तृतीयज्वरिणा स ज्वरः कन्थायां नियोजित इति नृपतिरालोक्य तेन राज्ञा कथं कन्था कम्पते इति पृष्टो नृपेण सह वार्त्तां कर्तुमक्षमतयेह ज्वर आरोपित इत्यभिहिते पार्थिवः प्राह । यद्येतावती शक्तिर्भवतस्तदा ज्वरः किं न सर्वथा प्रहीयते इति राजादेशे—

२४) उपतिष्ठन्तु मे रोगा ये केचित्पूर्वसंचिताः ।
आँनृण्ये[7] गन्तुमिच्छामि तच्छम्भोः परमं पदम् ॥

इति शिवपुराणोक्तान्यधीयन्नभुक्तं[8] कर्म न क्षीयते इति जानन् कथममुं विसृजामीति तेनाभिहिते त्रिपुरुषधर्मस्थानस्य चिन्तायकत्वाय नृपतिरभ्यर्थयामास ।

---

१ सपादलक्षनृपतिः B H  २ मुञ्जाल देव a P  ३ श्रीपत्तने P
४ शिवभक्ततया B H  ५ मुपागतः B  ६ कान्थडि B H  ७ आनृण्यं B

८ नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
इति संपूर्णः श्लोकः K आदर्शे

२५) अधिकारात्रिभिर्मासैर्माठापत्यात्रिभिर्दिनैः ।
शीघ्रं नरकवाञ्छा चेद्दिनमेकं पुरोहितः ॥

इति स्मृतिवाक्यं जानंस्तपउडुपेन संसारसागरमुत्तीर्य गोष्पदे निमज्जामि किमिति वचसा निषिद्धो नृपस्ताम्रशासनं मण्डकवेष्टितं निर्माय तस्मै भिक्षागताय पत्रपुटे मोचयामास । स तदजानंस्ततः प्रत्यावृत्तः । पुरा दत्तमार्गोऽपि सरस्वत्याः पूरे तदा न दीयमानमार्गे आजन्म निजदूषणानि विमृशंस्तात्कालिकभिक्षादोषपरिज्ञानाय यावद्विलोकते तावत्ताम्रशासनं ददर्श । तदनु क्रुद्धं तपोधनं विज्ञाय तत्रागत्य नृपस्तत्सान्त्वनाय यावद्विनयवाक्यानि ब्रूते तावत्तेन मया दक्षिणपाणिना गृहीतं भवत्ताम्रशासनं कथं वृथा भवतीति वयजल्लदेवनामा निजविनेयो नृपाय समर्पितः । तेन वयजल्लदेवेन प्रतिदिनमङ्गोद्वर्त्तनाय जात्यघुसृणस्याष्टौ पलानि मृगमदपलचतुष्टयं कर्पूरपलमेकं द्वात्रिंशद्वाराङ्गना ग्रामसहितं[1] सितातपत्रं च यदा ददासि तदा चिन्तायकत्वमङ्गीकारोमीत्यभिहिते राज्ञा तत्सर्वं प्रतिपद्य त्रिपुरुषधर्मस्थाने तपस्विभूपपदे सोऽभिषिक्तः । कंकरौले[2] इति प्रसिद्धः । इत्थं भोगान् भुञ्जानोऽप्यजिह्मब्रह्मचर्यनिरतः । स कदाचिन्निशि मूलराजपत्न्या परीक्षितुमारब्धः । ताम्बूलप्रहारेण कुष्ठिनीं विधाय पुनरनुनीतो निजोद्वर्त्तनविलेपनात्[3]स्नानोत्सृष्टपयःप्रक्षालनाच्च सज्जीचकार ॥

## ६ ॥ अथात्रैव लाखाकोत्पत्तिविप्रतिपत्ति[4]प्रबन्धः ॥

२६ पुरा कस्मिन्नपि[5] परमारवंशे कीर्त्तिराजदेशाधिपतेः सुता कामलतानाम्नी सा बाल्ये सममालिभिः कस्यापि प्रासादस्य पुरो रममाणा वरान्वृणीतेति ताभिर्व्याह्रियमाणा सा कामलता घोरान्धकारनिरुद्धनयनमार्गा प्रासादस्तम्भान्तरितं फुलडाभिधानं पशुपालमज्ञातवृत्त्या तमेव वृत्वा तदनन्तरं कतिपयैर्वर्षैः प्रधानवरेभ्य उपढौक्यमाना पतिव्रताव्रतनि-

१ ग्रासस्सहितं A B a H　२ कुंकूरौल a c d　३ लेपनस्नान P
४ विप्रतिपत्ति P ५ कदाचिदपि B H

वेहणाय पितरावनुज्ञाप्य निर्बन्धात्तमेवोपयेमे । तयोर्नन्दनो लाखाकः । स कच्छदेशाधिपतिः प्रसादितयशोराजवरप्रसादात्सर्वतोऽप्यजेयः । एकादशकृत्वस्त्रासितश्रीमूलराजसैन्यः । कस्मिन्नप्यवसरे कापिलकोटदुर्गे स्थित एव राज्ञा लाखाकः स्वयं निरुद्धः । तदनु स लक्षः काप्यवस्कन्ददानाय प्रहितं निर्व्यूढसाहसं माहेचाभिधं भृत्यमागच्छन्तमियेष । तत्स्वरूपमवधार्य श्रीमूलराजेन तदागमनमार्गेषु निरुद्धेषु स समासकार्यस्तत्रागच्छन् शस्त्रं त्यजेति राजपुरुषैरुक्तः स्वामिकार्यसमर्थनाय तथैव कृत्वा समरसज्जं लाखाकमुपेत्य प्राणंसीत् । अथ संग्रामावसरे—

२६) ऊग्या ताविउं[1] जहिं न किउ लक्खउ भणइ तिघट्ठ ॥
गणिया लब्भइ दीहडा के दहक अहवा अट्ठ ॥ १ ॥

इत्यादिबोधवाक्यानि[2] विविधानि व्याहरन्माहेचैभृत्येनोद्भटवृत्तिदर्शिनेन[3] प्रोत्साहितसाहसः श्रीमूलराजेन समं द्वन्द्वयुद्धं कुर्वाणस्तस्याजेयतां दिनत्रयेण विमृश्य तुर्यदिने श्रीसोमेश्वरमनुस्मृत्य ततोऽवतीर्णरुद्रकलया स लक्षो निजघ्ने । अथ तस्याजौ भूपतितस्य वातचलिते श्मश्रुणि पदा स्पृशन् राजा लक्षजनन्या लूतारोगेण[4] भवद्वंशो विपत्स्यत इति प्रशप्तः ॥[5]

२७) स्वप्रतापानले येन लक्षहोमं वितन्वता ।
सूत्रितस्तत्कलत्राणां बाष्पावग्रहनिग्रहः ॥ १ ॥

२८) कच्छपलक्षं हत्वा सहसाधिकलम्बजालमायातम् ।
संगरसागरमध्ये धीवरता दर्शिता येन ॥ २ ॥

**॥ इति लाखाकोत्पत्तिविपत्तिप्रबन्धः ॥**

**२७** (२९) मेदिन्यां लब्धजन्मा जितबलिनि बलौ बद्धमूला दधीचौ
रामे रूढप्रवाला दिनकरतनये जातशाखोपशाखा ।

---

१ ताव्यउजिहि L २ बहूनि वाक्यानि B ३ माहिचभृत्योद्भट K L साहिवाभत्योद्भट H ४ लूति P ५ श्लोकौ २७,२८ न दृश्येते H पुस्तके

किंचिन्नागार्जुनेन प्रकटितकलिका पुष्पिता साहसाङ्के
ओंमूलं[1] मूलराज त्वयि फलितवती त्यागिनि त्यागवल्ली ॥ ३ ॥

३०) स्नाता प्रावृषि वारिवाहसलिलैः संरूढदूर्वाङ्कुर–
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्त्वा निवापाञ्जलीन् ॥
प्रासादास्तव विद्विषां परिपतत्कुडयस्थपिण्डच्छला–
त्कुर्वन्ति प्रतिवासरं निजपतिप्रेताय पिण्डक्रियाम्* ॥ ४ ॥

इत्थं तेन राज्ञा पञ्चपञ्चाशद्वर्षाणि निष्कण्टकं[2] साम्राज्यं विधाय सन्ध्यानीराजनाविधेरनन्तरं राज्ञा प्रसादीकृतं ताम्बूलं वण्ठेन करतलाभ्यामादाय तत्र कृमिदर्शनात्तत्स्वरूपमवगम्य वैराग्यात्संन्यासाङ्गीकारपूर्वं च दक्षिणचरणाङ्गुष्ठे वह्नियोजनापूर्वं गजदानप्रभृतीनि महादानानि ददानोऽष्टभिर्दिनैः[3]—

३१) उद्धूमकेशं पदलग्नमग्नि—
मेकं विषेहे विनयैकवश्यः ।
प्रतापिनोऽन्यस्य कथैव का य—
द्बिभेद भानोरपि मण्डलं यः ॥
इत्यादिभिः स्तुतिभिः स्तूयमानो दिवमारुरोह ॥

अथ सं. ९९८ पूर्वं वर्षाणि ५५ राज्यं मूलराजेन चक्रे ।[4]

॥ इति मूलराजप्रबन्धः ॥

---

१ आमूला P * पद्यमिदं शार्ङ्गधरपद्धत्यां ( १२८० ) दृश्यते २ संवत् ९९८ पूर्वं निष्कंटकं B ३ द्वादशभि H L

४ a आदर्शमनुसृत्यमुद्रितपुस्तकेऽत्र निम्नलिखितः पाठः अथ सं. १०५० ! ( ५२ ) श्रावणसुदि ११ शुक्रे पुष्यनक्षत्रे वृषलग्ने श्रीचामुण्डराजो राज्ये उपाविशत् । अनेन श्रीपत्तने चन्दनाथदेव, चाच्चिणेश्वरदेवप्रासादौ कारितौ ॥ सं० १०६५ आश्विनशुदि ५ सोमे निरुद्धं वर्ष १३ मास १ दिन २४ राज्यं कृतं ॥ सं० १०६५ आश्विनशुदि ६ भौमे ज्येष्ठानक्षत्रे मिथुनलग्ने श्रीवल्लभराजदेवो राज्ये उपविष्टः । अस्य राज्ञो मालवकदेशे धाराप्राकारं वेष्टयित्वा शीलीरोगेण विपत्तिः संजाता । अस्य राजदमनशंकर इति तथा जगझंपण इति बिरुदद्वयं संजातं ॥

२८ सं. १०५३ पूर्वं वर्षाणि १३ श्रीचामुण्डराजेन राज्यं कृतं । अथ सं. १०६६ पूर्वं मास ६ वल्लभराजेन राज्यं कृतं। अथ सं. १०६६ पूर्वं वर्ष ११ मास ६ श्रीदुर्लभराजेन राज्यं कृतं । ( अथ तस्य राजमदनशंकर तथा जगझंपण इति बिरुदद्वयं जातं B ) तेन राज्ञा श्रीपत्तने दुर्लभसरोवरं रचयांचक्रे ॥

२९ तदनु* श्रीभीमाभिधानं भ्रातुः सुतं राज्येऽभिषिच्य स्वयं तीर्थोपासनवासनया वाराणसीं प्रति प्रतिष्ठासुर्मालवकमण्डलं प्राप्य तन्महाराजश्रीमुञ्जेन छत्रचामरादिराजचिह्नानि विमुच्य कार्पटिकवेषेणैव पुरतो व्रजेति यद्वा युद्धं विधेहीत्यभिहितेऽन्तरा धर्मान्तरायमुदितमवगम्य तं वृत्तान्तं नितान्तं श्रीभीमराजाय समादिश्य कार्पटिकवेषेण तीर्थे गत्वा परलोकं साधयामास । ततः प्रभृतिमालविकराजभिः सह गूर्जरनृपतीनां मूलविरोधः संवृत्तः ॥

---

## ६ ॥ अथ मुञ्जराजप्रबन्धः ॥

३० अथ प्रस्तावायातं मालवकमण्डलमण्डनश्रीमुञ्जराजचरितमेवम् । पुरा तस्मिन्मण्डले श्रीपरमारवंश्यः सिंहदन्तभटनामा नृपती राजपाटिकायां परिभ्रमन् शरवणमध्ये जातमात्रं रूपपात्रमतिमात्रं कमपि

---

–सं० १०६५ चैत्रशुदि ५ निरुद्धं मास, ५ दिन २९ अनेन राज्ञा राज्यं कृतं ॥ सं० १०६५ चैत्रशुदि ६ गुरौ, उत्तराषाढानक्षत्रे मकरलग्ने तद्भ्राता दुर्लभराजनामा राज्येऽभिषिक्तः । अनेन श्रीपत्तने सप्तभूमिधवलगृहकरणं व्ययकरणहस्तिशालाघटिकागृहसहितं कारितं ॥ स्वभ्रातृवल्लभराजश्रेयसे मदनशंकरप्रासादः कारितस्तथा दुर्लभसरः कारयांचक्रे ॥ एवं १२ वर्ष राज्यं कृतं ॥ तदनु सं० १०७७ ज्येष्ठसुदि १२ भौमे अश्विनीनक्षत्रे मकरलग्ने श्रीभीमाभिधानं

* तदनु भीमाभिधानं निजमंगजं राज्येऽभिषिच्य A B H १ यियासु d २ मालवकराज्ञां C ३ मालवकमण्डन P ४ श्रीसिंहभट C श्रीहर्षनामा d

बालमालोक्य पुत्रवात्सल्यादुपादाय देव्यै समर्पयामास । तस्य सान्वयं मुञ्ज इति नाम निर्ममे । तदनु सीन्धलं इति नाम्ना सुतः समजनि । निःशेषगुणपुञ्जमञ्जुलमुञ्जस्य राज्याभिषेकचिकीर्नृपस्तस्य सौधमलंकुर्वन्नमन्दमन्दाक्षतया निजवधूं वेत्रासनान्तरितां विधाय प्रणामपूर्वं भूपतिमारराध । राजा तं प्रदेशं विजनमवलोक्य तज्जन्मवृत्तान्तमादित एव तस्मै निवेद्य तव भक्त्या परितोषितः सन्सुतं विहाय तुभ्यं राज्यं प्रयच्छामीति वदन् परमेनेन सीन्धलनाम्ना बान्धवेन समं प्रीत्या वर्त्तितव्यमित्यनुशास्तिं दत्वा तस्याभिषेकं चकार । स्वजन्मवृत्तान्तप्रसरशङ्किना तेन स्वदयितापि निजघ्ने । तदनु पराक्रमाक्रान्तभूतलः समस्तविद्वज्जनचक्रवर्ती रुद्रादित्यनाम्ना महामात्येन चिन्तितराज्यैस्तं सीन्धलनामानं भ्रातरमुत्कटतयाज्ञाभङ्गकारिणं स्वदेशान्निर्वास्य सुचिरं राज्यं चकार । स सीन्धलो गूर्जरदेशे समागत्य काशहृदनगरसन्निधौ निजां

१ सिन्धुल b सिन्धुराज d B २ पुञ्जमुञ्जस्य a निःशेषराजगुणपुञ्ज d B H ३ समस्तसज्जन P ४ अत्र A आदर्शे पश्चात्प्रक्षिप्तमिव मुद्रितपुस्तके च निम्नावतारितमधिकमुपलभ्यते—चिन्तितराज्यश्चिरं सुखमनुभवन्कस्यामपि योषित्यनुरक्तश्चिरिकलाभिधकरभमधिरुह्य द्वादशयोजनीं निशि प्रयाति प्रत्यायाति च तया समं विश्लेषे जाते इमं दोधकमप्रैषीत्—

मुञ्ज षडल्ला दोरडी पेक्खिसि न गम्मारि ।
असाढि घण गज्जीइं चिक्खिलि होसेऽबारि ॥

५ शुभशीलकृतभोजप्रबन्धेऽयं प्रसंग इत्थं वर्णितः—

रुष्टेन मुञ्जभूपेन सिन्धुलो दुर्दमस्तदा ।
देशान्निष्कासितो मेदपाटे नागहृदे ययौ ॥ ४९ ॥
नागहृदपुरो प्रान्ते निजां पल्लीं निवेश्य सः ।
स्थितश्च मृगयां कर्तुमागाद्दीपोत्सवोषसि ॥ ५० ॥
* * * * ।
यावद्धन्ति किरिं तावद्देवीभूय जगावदः ॥ ५१ ॥
त्वत्साहसेन तुष्टोऽस्मि वरं याचस्व संप्रति ।
सिन्धुलोऽवक्षितौ क्षिप्तो मापतद्विशिखो मम ॥ ५३ ॥ मु. पु. ३३८

पल्लीं निवेश्य दीपोत्सवे रात्रौ मृगयां कर्तुं प्रयातः । चौरवधभूमेः सन्निधौ शूकरं चरन्तमालोक्य शूलिकायाः पतितं चौरशबमजानन् जानुनाधो विधाय यावत्प्रति किरिं शरं सज्जीकुरुते तावत्तेन शबेन संकेतितः। ततस्तं करस्पर्शान्निवार्य शूकरं तं शरेण विदार्य यावदाकर्षति तावत्स शबोऽट्टहासपूर्वमुत्तिष्ठन् सीन्धलेन प्रोचे तव संकेतकाले शूकरे शरप्रहारः श्रेयान् । किं वाऽवबुध्य मत्प्रदत्तः[1] प्रहार इति तद्वाक्यान्ते स छिद्रान्वेषी प्रेतः तन्निस्सीमसाहसेन परितुष्टो । वरं वृणु इत्यभिहितो[2] मम बाणः क्षितौ मा पतत्विति याचिते भूयोपि वरं वृणु । इति श्रुत्वा मद्भुजयोः सर्वापि लक्ष्मीः स्वाधीनेति । तत्साहसचमत्कृतः स प्रेत इत्याह त्वया मालवमण्डले गन्तव्यमिति । तत्र श्रीमुञ्जराजा सन्निहितविनाशस्तथापि तत्र त्वया गन्तव्यमेव तत्र तवान्वये राज्यं भविष्यतीति । तत्प्रेषितस्तत्र गत्वा श्रीमुञ्जराज्ञः संपदः पदं कमपि जनपदमवाप्य पुनरुत्कटतया श्रीमुञ्जेन निगृहीतनेत्रः काष्ठपञ्जरनियन्त्रितो भोजं सुतमजीजनत् । सोऽभ्यस्तसमस्तराजशास्त्रः षट्त्रिंशदायुधान्य[3]धीत्य द्वासप्ततिकलाकूपारपारंगमः समस्तलक्षणलक्षितो ववृधे । तज्जन्मनि जातकविदा केनापि नैमित्तिकेन जातकं समर्पितं ।

३२) पञ्चाशत्पञ्चवर्षाणि मासाः सप्त दिनत्रयम् ।
भोक्तव्यं[4] भोजराजेन सगौडं दक्षिणापथम् ॥[5]

इति श्लोकार्थमवगम्यास्मिन्सति मत्सूनो राज्यं न भविष्यतीत्याशङ्कयान्त्यजेभ्यो वधाय तं समर्पयामास । अथ तैर्निशीथे माधुर्यधुर्यां तन्मूर्त्तिमवधार्य तैर्जातानुकम्पैः सकम्पैश्चेष्टदैवतं स्मरेत्यभिहिते ।

१ अवबुध्य महाप्रदत्तः P अवबुध्यमदत्त K अवबुध्यति मत b २ त्यभिहिते K ३ दण्डायुधानि A B ४ भोजदेवेन भोक्तव्यं A ५ पद्यमिदं भोजप्रबन्धेप्यस्ति (६)

३३) *मान्धाता स महीपतिः कृतयुगालङ्कारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः[1] ।
अन्ये चापि युधिष्ठिरप्रभृतयो यावद्भवान् भूपते[2]
नैकेनापि समं गता वसुमती मन्ये[3] त्वया यास्यति ॥

इदं काव्यं पत्रके आलिख्य तत्करेण नृपतये समर्पयामास । नृपतिस्तद्दर्शनात्खेदमेदुरमना अश्रूणि मुञ्चन् भ्रूणहत्याकारिणं स्वं निनिन्द । अथ तैस्तं सबहुमानमानीय युवराजपदवीदानपूर्वं संमान्य तिलिङ्गदेशीयराज्ञा श्रीतैलिपदेवनाम्ना सैन्यप्रेषणैराक्रान्तो रोगग्रस्तेन रुद्रादित्यनाम्ना महामात्येन निषिध्यमानोऽपि तं प्रति प्रतिष्ठासुर्गोदावरीं सरितमवधीकृत्य तामुल्लंघ्य प्रयाणकं न कार्यमिति शपथदानपूर्वं व्याषिद्धोऽपि तं पुरा षोढानिर्जितमित्यवज्ञया पश्यन्नतिरेकवशात्तां सरितमुत्तीर्य स्कन्धावारं निवेशयामास[4] । रुद्रादित्यो नृपतेर्वृत्तान्तमवगम्य काममपि भाविनीमविनीततया विपदं विमृश्य स्वयं चितानले[5] प्रविवेश । अथ तैलिपेन[6] तत्सैन्यं छलबलाभ्यां हतविप्रहतं कृत्वा मुञ्जरज्वा विबध्य[7] श्रीमुञ्ज-

---

* पद्यमिदं भोजप्रबन्धे ( ३८ ) शार्ङ्गधरपद्धत्यां ( ४००२ ) सुभाषितार्णवेऽपि दृश्यते

१ अन्तकृत् c d २ प्रभृतयः सर्वेपि चास्तं गताः b ३ मुञ्ज b

४ गोदावर्यास्तटादर्वाक् स्थितेन भवता रणं ।
कार्यं न चेत्तवाहाय वपुर्भङ्गो भविष्यति ॥
गोदावरीपुरोभागभूः शूरास्ति भृशं नृप ।
तेन तत्र न गन्तव्यं रणाय भवता मनाक् ॥
इति शुभशीलकृते भोजप्रबन्धे मु. पु. पृ. ३३८

५ चिन्तानले a b ६ तैलपेन c d ७ मुञ्जं रज्वा बद्ध्वा a b c d

राजो जगृहे। कारागृहे निहितः काष्ठपञ्जरनियन्त्रितो मृणालवत्या तद्भगिन्या परिचार्यमाणस्तया सह जातकलत्रसंबन्धः । पाश्चात्यैर्निजप्रधानैः सुरङ्गादानपूर्वं तत्र ज्ञापितसंकेतः । कदाचिद्दर्पणे स्वं प्रतिबिम्बं पश्यन्नज्ञातवृत्त्या पृष्ठतःसमागताया मृणालवत्या वदनप्रतिबिम्बं जराजर्जरं मुकुरे निरीक्ष्य यूनः श्रीमुञ्जस्य वदनसामीप्यात्तद्विशेषविच्छायतया तां विषण्णामालोक्यैवमवादीत्—

(३४) *मुञ्ज भणइ मुणालवइ जुव्वण गयुं न झूरि ।
जइ सक्कर सयखण्ड थिय तो इस मीठी चूरि ॥

इति तां संभाष्य स्वस्थानं प्रति यियासुस्तद्विरहासहो भयात्तं वृत्तान्तं ज्ञापितुमशक्तो भूयो भूयः प्रोच्यमानोऽपि तां चिन्तामनुचरनलवणातिलवणरसवतीं भोजितोऽपि तदास्वादानवबोधात्तया निर्बन्धबन्धुरया गिरा सप्रणयं पृष्टः प्राह । अहमनया सुरङ्गया स्वस्थाने गन्तास्मीति चेद्भ-

१ शुभशीलकृते भोजप्रबन्धे मृणालवतीचरितं यथा :—
इतस्तैलिपदेवस्य पित्रा देवलभूभुजा ।
पत्नीस्थाने कृता दासी सुन्दरीत्यभिधा पुरा ॥
पुत्रीं मृणालवत्याह्वां सूते स्म सुन्दरी पराम् ।
* * * * ॥
वर्धमाना क्रमात्प्राप्ता यौवनं भगिनी पुनः ।
दत्ता तैलिपदेवेन श्रीपुरे चन्द्रभूपतेः ॥
चन्द्रो यदागमच्छूलरोगेण यममन्दिरम् ।
सापि तैलिपदेवस्य भ्रातुर्गेहमुपागमत् ॥
स्वसा तैलिपदेवस्य रण्डा मृणालवत्यथ ।
भक्तपानादि मुञ्जस्य चक्रे भ्रातृनिदेशतः ॥
तिलङ्गनगरोपान्ते गत्वा गव्यूतपञ्चके ।
ग्रामे चन्द्राभिधे तस्थुः सुरङ्गादातुमेव ते ॥
मु. पु. पृ ३३८–३३९

२ पभणइ मुञ्ज c d ३ जुव्वणु गियउं म झूरि c d

वंती[1] तत्र समुपैति तदा महादेवीपदेऽभिषिच्य प्रसादफलं दर्शयामीत्यभिहिते यावदाभरणकरण्डिकामुपनयामि तावत्क्षणं प्रतीक्षस्वेत्याभिदधानाऽसौ कात्यायिनीं तत्र गतो मां परिहरिष्यतीति विमृशन्ती स्वभ्रातुर्भूपतेस्तं वृत्तान्तं निवेद्य विशेषतो[2] विडम्बनाय बन्धनबद्धं कारयित्वा प्रतिगृहं भिक्षाटनं कारयाभास । स प्रतिगृहं परिभ्रमन्निर्वेदमेदुरतयेमानि वाक्यानि पपाठ ॥ तथाहि—

३५) सउ चित्तह[3] रि सट्ठी मम्मणहँ बत्तीसडी हियाहँ[4] ।
अम्मि[5] ते नर दड्ढ सीझे[6] जे वीससइं थियां ॥ १ ॥

३६) झोली[7] तुट्टी किं न मूउ किं न हूयउ छारपुञ्ज ।
हिण्डइ दोरीबन्धीयउ जिम मङ्कड तिम मुञ्ज ॥ २ ॥

तथा च—

३७) गय गय रह गय तुरय गय पायकर्डा[8] निभिच्च ।
सग्गट्ठिय करि मन्तण उम्मुहुं[9] ता रुद्दाइच्च ॥ ३ ॥

अथान्यस्मिन्वासरे कस्यापि गृहपतेर्गृहे भिक्षानिमित्तं नीतः । पड्डुकपाणिं[10] तत्पत्नी तक्रं पाययित्वा गर्वोद्धुरकन्धरां भिक्षादाननिषेधं विदधतीं मुञ्जः प्राह—

३८) भोलि[11] मुन्धि म गव्वु करि पिक्खि वि पडुगुपांइ
चउदसइ[12] सइं छहुत्तरइं मुञ्जह गयह गयाइं ॥ ४ ॥

---

१ तद्भवती a b २ विशेषतोऽपि H ३ चित्तहसट्टीमणह a ४ पञ्चासडीहियाह c d ५ अस्सीतेनर b हि अम्भि P ६ सियजे पत्तिजहतांह अम्मी सीजै d ७ झोली तुट्टिवि किं न गउ मुउ । छारहपुञ्ज घरिघरि तिम्म नचावियइ जिम C । तुटवि D झाली p । हुयउ b ८ पायकडा ठकुर रुदाइच्च C d ९ ऊंमुऊ b मतणुमहता d १० पड्डुकरूपाणि H ११ धनवन्ती म गव्व पंडुरआइ C १२ चउदहसइ a छउत्तर c

३९) मा मङ्कड कुरूद्वेगं यदहं खण्डितोऽनया।
रामरावणमुञ्जाद्याः स्त्रीभिः के के न खण्डिताः[1] ॥ ५ ॥
४०) रे रे यन्त्रक मा रोदीर्यदहं भ्रामितोऽनया।
कटाक्षाक्षेपमात्रेण कराकृष्टौ च का कथा[2] ॥ ६ ॥
४१) *जा मति पच्छइ सम्पज्जइ सा मति पहिली होइ।
मुञ्ज भणइ मुणालवइ विघन न वेढइ कोइ ॥ ७ ॥
४२) यशःपुञ्जो मुञ्जो गजपतिरवन्तिक्षितिपतिः
सरस्वत्यावासः समजनि पुरा यः कृतिरिति।
स कर्णाटेशेन स्वसचिवबुद्ध्यैव विधृतः
कृतः शूलाप्रोतस्त्वहह विषमाः कर्मगतयः ॥ ८ ॥
४३) सुहृद्देवेन्द्रस्य क्रतुपुरुषतेजोंशजनकः
प्रमीतः शय्यायां सुतविरहदुःखाद्दशरथः।
ज्वलत्तैलद्रोण्यां निहितवपुषस्तस्य नृपते—
श्चिरात्संस्कारोऽभूदहह विषमाः कर्मगतयः ॥ ९ ॥
४४) आपद्गतं हससि किं द्रविणान्धमूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम्।
किं त्वं न पश्यसि घटीर्जलयन्त्रचक्रे
रिक्ता भवन्ति भरिता भरिता च रिक्ताः[3] ॥ १० ॥
४५) अलङ्कारः शङ्काकरनरकपालं, परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो—
र्विधौ वक्रे मूर्ध्नि स्थितवति, वयं के पुनरमी[4] ॥ ११ ॥

---

१ पञ्चमात् द्वादशपर्यन्ताः श्लोकाः H पुस्तके न सन्ति २ पद्यमिदं सुभाषितावल्यां (२३८८) दृश्यते

३ पद्यमिदं सुभाषितार्णवेप्यस्ति ४ हैमकाव्यानुशासने (पृ. २२७) प्युदाहृतं पद्यमिदम्

४६) *सायर खाई लंक गढ गढवइ दससिरु राउ ।
भग्गक्खय सो भज्जि गय मुञ्ज म करि विसाउ ॥ १२ ॥

इत्थं सुचिरं भिक्षां भ्रामयित्वा वध्यभूमौ नृपादेशाद्वधविधौ नीतः । तैरुक्तमिष्टं दैवतं स्मर ।

४७) लक्ष्मीर्यास्यति गोविन्दे वीरश्रीर्वीरवेश्मनि ।
गते मुञ्जे यशःपुञ्जे निरालम्बा सरस्वती ॥

इत्यादि तद्वाक्यानि यथाश्रुतमवगन्तव्यानि ॥ तदनु मुञ्जं निहत्य तच्छिरो राजाङ्गणे शूलिकाप्रोतं कृत्वा नित्यं दधिवेष्टितं कारयन्निजममर्षं पुपोष । अथ मालवमण्डले तद्वृत्तान्तवेदिभिः सचिवैस्तद्भ्रातृजं भोजनामानं राज्येऽभ्यषिच्यत[1] ॥

**॥ इति श्रीविक्रमप्रमुखनृपवर्णनो नाम प्रथमः प्रकाशः ॥**

---

१ विक्रमाद्वासरादष्टमुनिव्योमेन्दुसंमिते ।
वर्षे मुञ्जपदे भोजभूपो पट्टे निवेशितः ॥
इति शुभशीलकृते भोजप्रबन्धे मु. पु. पृ. ३३९

श्रीः

# प्रबन्धचिन्तामणिः

## द्वितीय प्रकाशः

### ॥ भोजभीमप्रबन्धाः ॥

१ अथ यदा मालवकमण्डले श्रीभोजराजा राज्यं चकार तदात्र गुर्जरधरित्र्यां चौलुक्यवंशीय[1]श्रीभीमः पृथिवीं शशास । कस्मिन्नपि निशाशेषे स श्रीभोजः श्रियश्चञ्चलतां निजचेतासि चिन्तयन् कल्लोललोलं निजं जीवितं च विमृशन् प्रातःकृत्यानन्तरं दानमण्डपेऽनुचरैराहूतेभ्योऽर्थिभ्यो यदृच्छया सुवर्णटङ्ककान्दातुमारेभे ।

२ अथ रोहकाभिधानस्तन्महामात्यः कोशविनाशात्तदौदार्यगुणं दोषं मन्यमानोऽपरथा तं दानविधिं निषेद्धुमक्षमः सर्वावसरे भग्ने सभामण्डपभारपट्टे—

१) *आपदर्थे धनं रक्षेत्

इत्यक्षराणि खटिकयालेखि[2] प्रातर्यथावसरं नृपतिस्तान्वर्णान्निर्वर्ण्य समस्तपरिजने तं व्यतिकरमपन्हुवाने ।

भाग्यभाजः क्व चापदः ।
इति नृपतिना लिखिते ।
दैवं हि कुप्यते क्वापि
एवं मन्त्रिलिखनादनन्तरं नृपतिना[3] तद्विलोक्य
संचयोपि विनश्यति ॥

इति पुरो लिखिते स सचिवोऽभयं याचित्वा स्वलिखितं विज्ञापयामास[4] ॥ तदनु पण्डितानां[5] पञ्चशती मम मनोगजं ज्ञानाङ्कुशेन वशीकर्तुममात्रं[6] महामात्यसन्निभा यथोचितं ग्रासं लभते ॥

---

१ चौलुक्यचक्रवर्ती c d २ लिलेख c d ३ नृपः a नृपेण d
* भोजप्रबन्धे पद्यमिदं ( १९८ )
४ स्वं लेखकं ज्ञापयामास c d ५ इयं पण्डितानां c d ६ अतिमात्रं c d अङ्कुशेन वशीकुर्तुं d

तथाहि कङ्कणोत्कीर्णमार्याचतुष्टयमेतत्—

२) *इदमन्तरमुपकृतये प्रकृतिचला यावदस्ति संपदियम् ।
विपदि नियतोदितायां पुनरुपकर्तुं कुतोवसरः ॥ १ ॥

३) निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वणशशाङ्क ।
सुचिरं हन्त न सहते हतविधिरिह सुस्थितं किमपि ॥ २ ॥

४) अयमवसरः सरस्ते सलिलैरुपकर्त्तुमर्थिनामनिशम् ।
इदमपि सुलभमम्भो भवति पुरा जलधराभ्युदये ॥ ३ ॥

५) कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि चण्डरयः ।
तटिनि तटद्रुमपातिनि पातकमेकं चिरस्थायि ॥ ४ ॥

किंच—

६) यदि नास्तमिते सूर्ये न दत्तं धनमर्थिनाम् ।
तद्धनं नैव जानामि प्रातः कस्य भविष्यति ॥ ५ ॥

इति स्वकृतं कण्ठाभरणीकृतं श्लोकमिष्टमन्त्रवज्जपन्मन्त्रिन्, प्रेतप्रायेण भवता कथं विप्रलभ्ये ।

३ अथान्यस्मिन्नवसरे राजा राजपाटिकायां संचरन् सरित्तीरमुपागतः । तन्नीरमुल्लङ्घ्यागच्छन्तं दारिद्र्योपद्रुतं काष्ठभारवाहकं कमपि विप्रं प्राह—

---

* अयं श्लोकः राजतरंगिण्यां ( ५-३६ ) अवन्तिवर्म ( इ. स. ८५५ ) कालीनो वर्तते

१ उदयायां c d २ अयं श्लोकः कस्यापीति शार्ङ्गधरपद्धत्यां ( ५५१ ) ३ अयं श्लोकः वल्लभदेवस्येति शार्ङ्गधरपद्धत्या ( ११२८ ) मस्ति ४ अयं श्लोकः कस्यापीति शार्ङ्गधरपद्धत्यां प्रदत्तः ( ११२४ ) ५ दूरोन्नतिश्च भविता ते d ६ किंच श्लोकद्वयं कुण्डलोत्कीर्णम् ॥ तद्यथा—

ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥

यदि नास्तमिते-० इत्यादि B d

७ यदनस्त A B ८ इमानि सुभाषितानीष्ट d ९ विप्रलभ्यः d विप्रलम्भ्यः P

७) *कियन्मात्रं जलं विप्र

विप्र—

जानुदघ्नं नराधिप ।

इति तेनोक्ते राजा—

कथं सेयमवस्था ते

इति नृपेणोक्तः ॥ विप्र—

न सर्वत्र भवादृशाः ॥

इति तद्वाक्यान्ते यत्पारितोषिकं नृपतिरस्मै अदापयत्तन्मन्त्री धर्मवहिकायां श्लोकबद्धं लिलेख । तद्यथा—

८) लक्षं लक्षं पुनर्लक्षं मत्ताश्च दश दन्तिनः ।
दत्तं देवेन तुष्टेन जानुदघ्नप्रभाषणात्[1] ॥ १ ॥

४ ×अथान्यदा निशि निशीथसमयेऽकस्माद्विगतनिद्रो राजा राजानं गगनमण्डले नवोदितमालोक्य स्वसारस्वताम्भोधिप्रोन्मीलद्वेलानिभमिदं काव्यार्धमाह ।

९) यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।

इति राज्ञा भूयो भूयो निगद्यमाने कश्चिच्चौरो नृपसौधे खात्रपातपूर्वं कोशभुवने प्रविश्य प्रतिभाभरं निषेद्धुमक्षमः—

अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणशतकलङ्काङ्किततनुम् ॥

---

* इयं कथा ७,८ श्लोकसहिता भोजप्रबन्धे ( पृ ४० ) पि वर्तते

१ प्रभाषिणे A C D २ ऊचे L

× भोजप्रबन्धे चतुर्थः प्रबन्धः ९,१० श्लोकसहितो ( पृ. ५२,५३ ) वर्तते ९,१० श्लोकौ हर्षदेवचौर्योरिति सुभाषितावल्यां ( १९७८,१९७९ ) प्रदत्तौ

इति तत्पठनानन्तरं चौरमङ्गरक्षकैः कारागारे निवेशयामास । ततोऽहर्मुखे सभामुपनीताय तस्मै चौराय यत्पारितोषिकं राज्ञा प्रसादीकृतं तद्धर्मवहिकानियुक्तो नियोग्येवं काव्यमलिखत् ।

१०) अमुष्मै चौराय प्रतिनिहितमृत्युप्रतिभिये
प्रभुः प्रीतः प्रादादुपरितनपादद्वयकृते ।
सुवर्णानां कोटीर्दश दशनकोटिक्षतगिरी-
न्करीन्द्रानप्यष्टौ मदमुदितगुञ्जन्मधुलिहः ॥

९ अथ कदाचित्तस्यां वाच्यमानायां स्वमेव स्थूललक्षं मन्यमानो दर्पभूताभिभूत इवं

११) तत्कृतं यन्न केनापि तद्दत्तं यन्न केनचित् ।
तत्साधितमसाध्यं यत्तेन चेतो न दूयते ॥

इति स्वं मुहुर्मुहुः श्लाघमानः केनापि पुरातनमन्त्रिणा तद्गर्वखर्वचिकीर्षया श्रीविक्रमार्कधर्मवहिका नृपायोपनिन्ये । तस्या उपरितनविभागे प्रथमतः प्रथमं काव्यमेतत्—

१२) अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मदगन्धमत्तमधुपक्रोधोद्धुराः सिन्धुराः ।
अश्वानामयुतं प्रपञ्चचतुरं वाराङ्गनानां शतं
दण्डे पाण्ड्यनृपेण ढौकितमिदं वैतालिकस्यार्पितम् ॥

१३) वक्त्राम्भोजे सरस्वत्यधिवसति—०
अस्य काव्यस्य पारितोषिकदानमष्टौ हाटकमिदं काव्यं ज्ञेयम् ॥

---

१ दर्पाभिभूतः C २ तारुण्योपचयप्रपञ्चितदशां d ३ वेतालकस्य b d वैतालिकायार्प्यतामिति भोजप्रबन्धे पाठः ४ पद्यमिदं भोजप्रबन्धे ( २३१ ) शार्ङ्गधरपद्धत्यां च वर्तते एतत्संबन्धिनी कथा कथारत्नाकराच्च ज्ञेया पञ्चमः प्रबन्धः १२,१३ श्लोकसहितो भोजप्रबन्धे ( पृ. ५१ ) वर्तते ५ अयं श्लोकः पूर्वं विक्रमार्कप्रबन्धे ( श्लो. १४ ) संपूर्णः प्रदत्तः

इति सत्काव्यार्थमवगम्य तदौदार्यविनिर्जितगर्वसर्वस्वस्तां वहिकामर्चयित्वा यथास्थानमस्थापयत् ।

६ प्रतीहारेण विज्ञप्तः स्वामिन्देवदर्शनोत्सुकं सरस्वतीकुटुम्बं द्वारमध्यास्ते । क्षिप्रं प्रवेशयेति राजादेशादनु प्रथमं प्रविष्टा* तत्प्रेष्या प्राह—

१४) बा[1]पो विद्वान् बापपुत्रोऽपि विद्वान्
आई विउ[2]षी आईधुआपि विउषी ।
काणी चेटी सापि विउ[3]षी वराकी
राजन्मन्ये विज्ज[4]पुञ्जं कुटुम्बम् ॥

इति तस्य प्रहसनप्रायेण वचसा नृपतिरीषद्विहस्य तज्ज्येष्ठपुरुषाय समस्यापदमाह—

असारात्सारमुद्धरेत् ॥

१५) ×दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥

अथ नृपस्तत्पुत्राय—हिमालयो नाम नगाधिराजः । चकार मेनाविरहातुराङ्गीति नृपतिवाक्यानन्तरम्—

१६) तव प्रतापज्वलनाज्जगाल
हिमा[5]लयो नाम नगाधिराजः ।
चकार मेना विरहातुराङ्गी
प्र[6]वालशय्याशरणं शरीरम् ॥

---

* प्रविष्टः तत्प्रेष्यः प्राह A प्रविष्टं तत् । प्रेष्यः प्राह P

१ बप्पो b २ विदुषी a c d ३ विद्री a विध्री C विदुसी d ४ विद्म b विद्व d

× पद्यमिदं साहित्यदर्पणे, सुभाषितार्णवे हैमकाव्यानुशासने (पृ–२८७) च दृश्यते

५ पद्यमिदं कुमारसंभवस्थं ( १–१ ) ६ इदमपि कुमारसंभवस्थं ( ३-८ )

इति समस्यायां पूरितायां ज्येष्ठस्य पत्नीं प्रति राजा । कवणु पियावउ खीरु । इति समस्यापदे राज्ञाऽर्पिते—

१७) जइं यह रावणु जाईयउ दहमुह इक्कु शरीरु ।
जणणि वियम्भी चिन्तवइ कवणुपियावउ खीरु ॥

सेत्थं पूरयामास ॥ अथ दासीं प्रति राज्ञः, कण्ठि विलुलइं काउ । इति समस्यापदं ।

१८) काण वि विरहकरालिइं पइउड्डावियउ वराउ ।
सहि अच्चभूउं दिठ्ठ मइं कण्ठि विलुलइ काउ ॥

सा इत्थं पूरयामास । सुतां विस्मृत्य राज्ञा तानि सर्वाणि सत्कृत्य विसृष्टानि ॥

अथ राजा विसृष्टसर्वावसरः चन्द्रशालाभुवि परिभ्रमन्विधृतातपत्रो द्वाःस्थेन विज्ञप्तसुतावृतान्तो नृप उच्यतामिति तां प्रति प्राह ॥ अथ सा—

१९) राजन्भोर्जे कुलप्रदीप निखिलक्ष्मापालचूडामणे
युक्तं संचरणं तवात्र भुवने छत्रेण रात्रावपि ।
मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाविलक्षः शशी
मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् ॥

इति तद्वाक्यानन्तरं तत्सौन्दर्यापहृतचित्तस्तामुद्वाह्य भोगिनीं चकार ।

७ अथान्यदा यमलपत्रेषु सत्स्वपि सन्धिदूषणोत्पत्तये श्रीभोजराजो गूर्जरदेशविज्ञतां जिज्ञासुः सान्धिविग्रहिककरे कृत्वेमां गाथां भीमं प्रति प्राहिणोत् ॥

२०) हेलानिद्दलियगइंदकुम्भपयडियपयावपसरस्स ।
सिंहस्स मएण समं न विग्गहो नेय सन्धाणं ॥

१ जेह a जइ b २ अच्चिभू c d ३ सर्वावसरे a P ४ मुञ्जकुल B H
५ भोजप्रबन्धेपि पद्यमिदं दृश्यते ( २१२ )

इति तदुत्तररूपां गाथां याचमानो भीमः सर्वेषामपि महाकवीनां गाथाबन्धान्विविधान्फल्गुवल्गितांश्चिन्तयन् ।

२१) अन्धयसुयाण कालो पुहवीई[1] भीमो निम्मिओ[2] विहिणा ।
जेण सयंपि न गणियं का गणणा[3] तुज्झ इक्कस्स[4] ॥

इति गोविन्दाचार्यविरचितां तां चेतश्चमत्कारिणीं गाथां तस्य प्रधानस्य करे प्रस्थाप्य सन्धिदूषणमपाहरत् ॥

८ कस्मिन्नप्यवसरे प्रतिहारनिवेदितः कोऽपि पुरुषः सभां प्रविश्य श्रीभोजं प्रति—

२२) अम्बा[5] तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहमपि न तया न तया वद राजन्कस्य दोषोऽयम् ॥

इति तद्वाक्यानन्तरं तदाजन्मदारिद्र्यद्रोहि पारितोषिकं दापयामास ॥

९ अथ कस्यामपि निशि हिमसमये वीरचर्यया नृपतिः परिभ्रमन्कस्यापि देवकुलस्य पुरः कमपि पुरुषं—

२३) *शीतेनोद्धुषितस्य[6] माषफलवच्चिन्तार्णवे मज्जतः
शान्तोऽग्निः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता
सत्पात्रप्रतिपादितेव कमला[7] न क्षीयते शर्वरी ॥

---

१ पुहवीभीमोय P २ निम्मिउ b ३ गणना a ४ एकस्स C ५ पद्यमिदं भोजप्रबन्धे (३०९) सुभाषितावल्यां (३१८५) च भट्टकपर्दिन इति। अयं प्रबंधः d आदर्शे निम्नरूपो वर्तते-अथ तन्नगरनिवासी कोऽपि द्विजः केवलभिक्षामात्रवृत्तिः कस्मिन्नपि पर्वणि स्नानव्याकुले सकलेऽपि नगरलोके अलब्धभिक्षया रिक्तताम्रपात्र एवागत इति ब्राह्मण्या निर्भर्त्स्यमानः संजातकलहे तां प्रति प्रदत्तप्रहार आरक्षपुरुषैः संयम्य राजमंदिरे नीयमानो राज्ञा पृष्टः सन्नाह। अम्बा तुष्यतीति श्लोकं पपाठ । तदर्थं पण्डितेष्वनवबुद्ध्यमानेषु राज्ञा स्वमनीषया तदभिप्रायं समुपालभ्य तस्मै लक्षत्रये दापिते सति श्लोकार्थं कलहमूलं तदपि दारिद्र्यमूलं नृपो व्याचख्यौ ६ उद्धूषितस्य d ७ वसुधा d
*२३,२४,२५ पद्यानि भोजप्रबन्धे (२३२,२३३,२३४) वर्तन्ते नवमःप्रबन्धश्चापि

इति पठन्तं श्रुत्वा निशान्तमतिवाह्य[1] तं प्रातराहूय पप्रच्छ । कथं-भवता निशाशेषेऽत्यन्तशीतोपद्रवः सोढः । सत्पात्रप्रतिपादितेति संकेत-पूर्वं समादिष्टः । स्वामिन्मया घनत्रिचेलीबलेन शीतमतिवाह्यते। स इति विज्ञपयन्, का तव त्रिचेलीति भूयोऽभिहित इदमपाठीत् ।

२४) रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
राजन् शीतं मया नीतं जानुभानुकृशानुभिः ॥
स इत्थं वदन् राज्ञा लक्षत्रयदानेन परितोषितः–

२५) धारयित्वा त्वयात्मानमहो[2] त्यागाध्वनाधुना ।
मोचिता बलिकर्णाद्याः सच्चेतोगुप्तिवेश्मनः[3] ॥

इति सारस्वतोद्धारपरस्तत्पारितोषिकदानाक्षमेण राज्ञा सोपरोधं निवारितः ।

१० अन्यस्मिन्नवसरे राजा राजपाटिकाया गजारूढः पुरान्तरा संच-रन्कमपि रोरं भूमिपतितकणांश्चिन्वन्तमवलोक्य—

२६) नियउयरपूरणम्मि य असमत्था किंपि तेहि जाएहिं ।
इति तेनार्धकविना पूर्वार्धे प्रोक्ते—
सुसमत्था वि हु न परोवयारिणो तेहि वि नहि किंपि[4] ॥ १ ॥
इति तद्वचनान्ते ॥

२७ ) परपत्थणापवत्तं मा जणणि जणेसु एरिसं पुत्तं ।
इतितद्वाक्यादनु—
मा पुहवि मा धरिज्जसु पत्थणभङ्गो कओ जेहिं ॥ २ ॥

स इति वदन्कस्त्वमिति राज्ञाभिहितो नगरप्रधानैर्भवद्भिर्विविधविद्वद्घटा-

---

१ निशान्ते A २ त्वयामान P ३ द्वारपूरपरे P ४ न किंपि d

यामपरथा प्रवेशमलभमानोऽनेनैव प्रपञ्चेन स्वामिदर्शनचिकीरयं राजशेखर इति ज्ञापितः।

तदुचितमहादानैः प्रसादीकृते—

२८) [2]भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्छितम्।
तस्मिन्नेव सरस्यकालजलदेनोन्नम्य तच्चेष्टितं
येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते॥

इत्यकालजलदराजशेखरोक्तिः[3]॥

११ कस्मिन्नपि संवत्सरे वृष्ट्यभावात्कणतृणानामप्राप्त्या स्थानपुरुषैर्भोजागमं ज्ञापितः श्रीभीमश्चिन्तां प्रपन्नो डामरनामानं सान्धिविग्रहिकमादिशत्। यत्किमपि दण्डं दत्वाऽस्मिन्वर्षे श्रीभोज इहागच्छन्निवार-

---

१ इति भाषिणे विप्राय हस्तिनीं ददौ पुनः स विप्रः—

निर्वाता न कुटी न चाग्निशकटी नापि द्वितीया पटी
वृत्तिर्नारभटी न तुन्दिलपुटी भूमौ च वृष्टा कटी।
तुष्टिर्नैकघटी प्रिया न वधुटी तेनाप्यहं संकटी
श्रीमद्भोज तव प्रसादकरटी भङ्क्तां ममापत्तटी॥ D B

इति श्रुत्वा एकादशसहस्राश्च प्रदत्ताः B

२ पद्यमिदं भोजप्रबन्धे (२०१) तथा च शार्ङ्गधरपद्धत्यामकालजलदस्येति (३७७७) सुभाषितावल्यां (८४३) च दाक्षिणात्यस्येति

३ अथ राजशेखरनामा कविः संध्यायां महाकालप्रसादे सुप्तः पठति—

पोतानेतान्नय गुणवति गीष्मकालावसानं
यावत्तावच्छमय रुदतो येन केनाशनेन।
पश्चादम्भोधररसपरीपाकमासाद्य तुम्बी
कूष्माण्डी च प्रभवति यदा के वयं भूभुजः के॥

प्रबन्धेन राज्ञा सर्वस्वदानात्तोषितेन कविनोक्तं भेकैरिति॥ D B

णीयः । स इति तदादेशात्तत्र गतोऽत्यन्तविरूपवान्परचित्तज्ञः श्रीभोजेनेत्यभिदधे† ।

२९) यौष्माकाधिपसन्धिविग्रहपदे दूताः कियन्तो वद
माद्दक्षा[1] बहवोऽपि मालवपते ते सन्ति तत्र त्रिधा ।
प्रेष्यन्ते[2]ऽधममध्यमोत्तमगुणप्रेक्षानुरूपक्रमा-
त्तेनान्तःस्मितमुत्तरं विदधता धाराधिपो रञ्जितः ॥

इति[3] तद्वचनचातुर्यचमत्कृतो राजा गूर्जरदेशं प्रति प्रयाणपटहदानं चक्रे । प्रयाणावसरे बन्द्योक्तं ।

३०) चौलैः[4] क्रोडं पयोधेर्विशति निवसते रन्ध्रमन्ध्रो गिरीन्द्रे
कर्णाटः पट्टबन्धं न भजति भजते गूर्जरो निर्झराणि ।
चेदिर्लेलीयतेऽस्त्रैः क्षितिपतिसुभटःकन्यकुब्जोऽत्र कुब्जो
भोज त्वत्तन्त्रमात्रप्रसरभयभरव्याकुलो राजलोकः[5] ॥ १ ॥

---

† अथैकदा डामरनामा नागरज्ञातीयो द्विजः श्रीभोजपार्श्वे गतो राज्ञोपहासपूर्वमभिदधे यौष्माका–० इति d b आदर्शयोः पाठः १ त्वादृक्षा L २ प्रेक्षन्ते d ॥ ३ अत्र निम्नरूपं वर्णनं d b आदर्शयोः–श्रीभोजराजा गूर्जरोपरि कृतप्रस्थानो बाह्यावासे कृतस्नानो भेटितः सन् राज्ञोचे डामराख्यः । भीमडीयाको नापितोऽद्य कल्ये किं करोति । तेनोक्तं । अन्येषां राज्ञां शिरोमुण्डितमेकस्य शिरो जलभिन्नमास्ते पश्चान्मुण्डयिष्यतीति भणिते राज्ञा चमत्कृतेन राजभुवने राजविडम्बननाटके चित्रे डामरस्वामी कर्णाटराज्ञश्चाद्दनि कुर्वन् दर्शितः । दूतेनोक्तं ।

भोजराज मम स्वामी यदि कर्णाटभूपतेः ।
कराकृष्टो न पश्यामि कथं मुञ्जशिरः करे ॥ १ ॥

इति वाक्येन स्मृतपूर्ववैरः गूर्जरदेशं परित्यज्य कर्णाटोपरि प्रयाणं कृतवान् । नृपाग्रे डामरस्योक्तिः—

सत्यं त्वं भोज मार्त्तण्ड पूर्वस्यां दिशि राजसे ।
सूरोपि लघुतामेति पश्चिमाशावलम्बने ॥

४ चौडः d b ५ पद्यमिदं काव्यानुशासने दृश्यते

३१) कोणे कौङ्कणकः कपाटनिकटे लाटः कलिङ्गोऽङ्गणे—
त्वं रे कोशल नूतनो मम पिताप्पत्रोषितः स्थण्डिले।
इत्थं यस्य विवर्द्धितो निशि मिथः प्रत्यर्थिनां संस्तर-
स्थानन्यासभुवा विरोधकलहः कारानिकेतक्षितौ ॥ २ ॥

प्रयाणकपटहदापनादनु समस्तराजविडम्बनाटकेऽभिनीयमाने। सकोपः कोऽपि भूपः कारागारान्तरास्थितं सुस्थितं तैलिपं भूपमुत्थापयंस्तेनोचे। अहमिहान्वयवासी कथमागन्तुकभवद्वचसा निजं पदमुज्झामीति। विहसन्नृपो डामरं प्रति नाटकरसावतारं प्रशंसंस्तेनाभिदधे। देवातिशयिन्यपि रसावतारे धिग्नटस्य कथानायकवृत्तान्तानभिज्ञताम् यतः श्रीतैलिपदेवराजः शूलिकाप्रोतमुञ्जराजशिरसा प्रतीयत इति सभासमक्षं तेनोक्ते तन्निर्भत्सनसंपन्नमन्युरनन्यसामग्र्या[1] तदैव तिलङ्गदेशं प्रति प्रयाणमकरोत्।

अथ तैलिपदेवस्यातिबलमायान्तमाकर्ण्य व्याकुलं श्रीभोजं डामरः समायातः कल्पितराजादेशदर्शनपूर्वं भोगपुरे श्रीभीमं समायातं विज्ञपयामास। तया तद्वार्तया क्षते क्षारनिक्षेपसदृक्षया विलक्षीक्रियमाणः श्रीभोजराजो डामरमभ्यधात्। अस्मिन्वर्षे त्वया स्वस्वामी कथंचनेहागच्छन्निवार्य इति भूयो भूयः सदैन्यं भाषमाणे नृपे प्रस्तावविन्नृपाद्धस्तिनीसहितं हस्तिनमुपायने उपादाय पत्तने श्रीभीमं परितोषयामास। *

---

१ रनन्यसामान्यसामग्र्या B H

* अत्र मु. जि. F सञ्ज्ञकआदर्शे डामरसम्बन्धी निम्नलिखितमधिकमुपलभ्यते—

अथान्यस्मिन् वर्षे श्रीभीमस्तं डामरं मालवमण्डले प्रेषयितुकामो वार्तादि शिक्षयन् आस्ते। डामर उत्तिष्ठन् पटीं प्रास्फाडयामास। ततः श्रीभीमेन पृष्टः स आह—भवच्छिक्षितमत्रैव मुञ्चामीत्यूचे। यतस्तत्र गतोऽहं स्वयमेवावसरोचितं ब्रुविष्ये। अन्यशिक्षितं कियत्कथयिष्यते। ततो राजा तस्यावसरोचितचातुरीविज्ञानाय प्रच्छन्नं स्वर्णमयं समुद्गकं रक्षापुञ्जेन भृत्वा,भोजसभाया अन्यत्र नायमुद्घाटनीयः, इति शिक्षयित्वा तद्धस्ते उपदार्थमदात। ततः स गतो मालवभोजसभायां तं बहुपट्टकूलवेष्टितं आनाय्य भोजनृपाग्रे मुमोच। स उद्वेष्ट्य विलोकयति तदा मध्ये छारपुञ्जः। ततो—

१२ कस्मिंश्चिद्धर्मशास्त्राकर्णनक्षणेऽर्जुनस्य राधावेधमाकर्ण्य किमभ्यासस्य दुष्करमिति विमृशन्सतताभ्यासवशाद्विश्वविदितं राधावेधं विधाय नगरे हट्टशोभां कारयंस्तैलिकसूचिकाभ्यामवज्ञया निराकृतोत्सवाभ्यां श्रीभोजभूपो व्यज्ञप्यत। तैलिकेन चन्द्रशालास्थितेन भूमिस्थितसंकीर्णवदने मृण्मयपात्रे तैलधाराधिरोपणात्, सूचिकेन च भूमिस्थितेनोर्ध्वीकृततन्तुमुखे आकाशात्पतन्त्याः सूच्या विवरं नियोज्य निजाभ्यासकौशलं निवेद्य नृपं प्रति चेच्छक्तिरस्ति ततः प्रभुरप्येवं करोत्वित्यभिधाय राज्ञो गर्वं खर्वं चक्राते ॥

३२) भोजराज मया ज्ञातं राधावेधस्य कारणम्।
धाराया विपरीतं हि सहते न भवानिति[1]॥ *

१३ विद्वद्भिरिति श्लाघ्यमानो नवनगरनिवेशं कर्तुकामः पटहे वाद्यमाने धाराभिधया पणस्त्रियाग्निवेतालनाम्ना पत्या सह लङ्कां गत्वा तं

—नृपेणोक्तम्—भो इदं किमुपायनम्? डामरस्तत्कालोत्पन्नमतिः प्राह—देव! श्रीभीमेन कोटिहोमः कारितः, तद्रक्षेयं तीर्थभूता, प्रीत्या भवत्कृते प्राभृतीकृताऽस्ति। इति तेनोक्ते हृष्टचेतसा राज्ञा स्वहस्तेन सर्वेषां समर्पिता। तैः सर्वैस्तिलककरणेन वन्दिता। अन्तःपुरे प्रेषिता। ततः स सम्मानितः प्रतिप्राभृतसहितः पश्चादागतः। ज्ञातवृत्तान्तेन श्रीभीमेनापि पूजितः।

पुनः कौतुकाक्षिप्तचित्तः श्रीभीमः कस्मिन्नवसरे मुद्रामुद्रितलेखं विधाय तद्धस्ते समर्प्य, उपदापाणिं तड्डामरं मालवेऽप्रैषीत्। स उपदासहितं लेखं भोजहस्तेऽदात्। यावदुन्मुद्य वाचयति तावदयं भवता शीघ्रं निपातनीय इति पश्यति। ततः सविस्मयेन राज्ञा पृष्टम्—भो इदं किं लिखितमस्ति। ततः स उत्पातिकामतिः प्राह—देव! मज्जन्मपत्रिकायां समस्ति, यत्रास्य रुधिरं पतिष्यति तत्र द्वादशवर्षप्रमाणो दुर्भिक्षः पतिष्यति इति ज्ञात्वा श्रीभीमेनाहमत्र प्रेषितः स्वदेशविनाशभीतेन प्रच्छन्नलेखयुक्तः। एवं सति त्वं यथा रुचितं कुरु इति तेनोक्ते राजाह— नाहमात्मदेशप्रजामनर्थे पातयिष्ये। ततः सम्मान्य विसर्जितः प्राप्तः स्वदेशे। तद्बुद्धिकौशलेन पुनश्चमत्कृतः श्रीभीमस्तं बहुमन्यते।

१ नैव भूपतिः H २ प्रवेष्टु कामः H L * पद्यमिदं वाग्भटकृत काव्यानुशासनेप्युदाहृतम् भोजराजस्थाने प्रज्ञापुञ्जेति पाठान्तरं तत्र

नगरनिवेशमालोक्य पुनः समागतया मन्नाम नगरे दातव्यमित्यभिधाय तत्प्रतिच्छन्दपटं समर्प्य स धारां नगरीं निवेशयामास ।

१४ कस्मिन्नप्यहनि स नृपः सान्ध्यसर्वावसरानन्तरं निजनगरान्तः परिभ्रमन् ॥

३३) एऊ जम्मु नग्गहं गिउ भडसिरि खग्गु न भग्गु ।
　　तिक्खां तुरियां न माणियां गोरी गलि न लग्गु ॥

इति केनापि दिगम्बरेण पठ्यमानमाकर्ण्य प्रातस्तमाकार्य रात्रिपठितवृत्तान्तसंकेतवशेन शक्ति पृष्टः सन्—

३४) देव दीपोत्सवे जाते प्रवृत्ते दन्तिनां मदे ।
　　एकच्छत्रं करोम्येव सगौडं दक्षिणापथम् ॥

इति स्वपौरुषमाविःकुर्वन्सेनानीपदेऽभिषिक्तः ॥

१५ इतश्च सिन्धुदेशविजयव्यापृते श्रीभीमे स दिगम्बरः समस्तसामन्तैः समं समेत्य श्रीमदणहिल्लपुरं भङ्गं कृत्वा धवलगृहघटिकाद्वारे कपर्दिकान्वापयित्वा जयपत्रं जग्राह । तदादि कुलचन्द्रेण मुषितमिति सर्वत्र क्षितौ ख्यातिरासीत् । स जयपत्रमादाय मालवमण्डले गतः श्रीभोजाय तं वृत्तान्तं विज्ञपयन्नुक्तो भवताङ्गालवापः.कथं न कारितोऽत्रत्यमुद्ग्राहितं गूर्जरदेशे प्रयास्यतीति श्रीसरस्वतीकण्ठाभरणेन श्रीभोजेनेत्यभिदधे ॥

---

१ प्रावृत्ते P २ कुलचंद्रं समेत्य H

३ १४,१५,१६ प्रबन्धानां स्थाने निम्नलिखितं C आदर्शे समुपलभ्यते
नवजलभरीया मग्गडा गयणि धडक्कई मेहु ।
इत्थन्तरि जरि आविसिइ तउ जाणीसिइ नेहु ॥
एषां भूवल्लभया सह० राज्ञा तन्निजपुत्रीस्वरूपं दृष्टं प्रातराकार्य गूर्जरदेशोपरि सेनाधिपत्यं ददौ तदा तेनोक्तं । देव दीपेति ॥ ततो गूर्जरदेशः समग्रोपि तेन विनाशितः । श्रीपत्तनचतुःपथे कपर्दिका वापितास्तस्यागतस्य राज्ञोक्तं । न कृतं रम्यं । अद्य प्रभृति मालवदेशदण्डः श्रीगूर्जरे यास्यतीति ॥

१६ कदाचिच्चन्द्रातपे उपविष्टः श्रीभोजः संनिहिते कुलचन्द्रे पूर्णचन्द्रमण्डलमवलोकमान इदमपाठीत्—

३५) येषां वल्लभया सह क्षणमिव क्षिप्रं क्षपा क्षीयते
तेषां शीतकरः शशी विरहिणामुल्केव संतापकृत् ।

इत्यर्धकविना तेनोक्ते कुलचन्द्रः प्राह—

अस्माकं तु न वल्लभा न विरहस्तेनोभयभ्रंशिना-
मिन्दू राजति दर्पणाकृतिरसौ नोष्णो न वा शीतलः ॥ ‡

इति तदुक्तेरनन्तरमेवैकां वेराङ्गनां प्रसादीचकार ॥

१७ अथ डामरनामा सान्धिविग्रहिको मालवमण्डलादायातः श्रीभोजस्य सभां वर्णयन्महान्तमायलैकं जनयति । तत्र गतश्च श्रीभीमस्यामैात्रां रूपपात्रतां वर्णयंस्तद्दिदृक्षातरलितः श्रीभोजस्तामिहानय तत्र वा मां नयेत्यभ्यर्थ्यमानः सभादर्शनोत्कण्ठितेन भीमेन तथैवोच्यमानश्च कस्मिन्नपि वर्षे उपायविन्महदुपायनमादाय विप्रवेषधारिणं ताम्बूलकरण्डकवाहिनं श्रीभीमं स गृहीत्वा सदसि गतः प्रणमन् श्रीभोजेन श्रीभीमानयनवृत्तान्तं व्याहृतः स विज्ञपयांचक्रे । स्वतन्त्राः स्वामिनोऽनभिमतं कार्यं केन बलात्कार्यन्ते, इति सर्वथेयं कदाशा देवेन नावधारणीया इत्यभिहिते, श्रीभीमस्य वयोवर्णाकृतीनां सादृश्यं पृच्छञ्श्रीभोजस्तान्सभासदो लोकानवलोकयन्स्थगीधरं लक्षीकृत्य डामरेणेत्यभिदधे—स्वामिन्

३६) इमाकृतिरयं वर्ण इदं रूपमिदं वयः ।
अन्तरं चास्य भूपस्य काचचिन्तामणेरिव ॥

---

‡ पद्यमिदं शार्ङ्गधरपद्धत्यां (४१०६) भोजराजचोरकविकृतमिति वर्तते

१ इत्यर्धं P २ वारांगनां H ३ आश्चर्यं ४ अतिमात्रां H ५ सर्वथाप्येके दासा देवेन नावधीरणीयाइत्यभिधाय P

इति तेन विज्ञप्ते चतुरचक्रवर्ती श्रीभोजस्ततसामुद्रिकविलोकनान्निश्चलदृक्। तादृशं नृपं विमृश्योपायनवस्तून्युपनेतुं स सान्धिविग्रहिकस्तं प्राहिणोत्। तेषु वस्तुषूपनीयमानेषु तद्गुणवर्णनवार्त्तान्तरव्याक्षेपेण च भूयसि कालविलम्बे संवृत्ते स्थगीवाहकोऽद्यापि कियच्चिरं विलम्बत इति राज्ञा समादिष्टः स तं भीममिति विज्ञपयामास। राजा तदा तदनुपदिकानि सैन्यानि प्रगुणयन् डामरेणाभिदधे। द्वादश द्वादश योजनानां प्रान्ते प्रावहणिका हया घटिकायोजनगामिन्यः कैर[2]भ्योऽनया समग्रसामग्र्या श्रीभीमो भुवमाक्रमन्कथं भवता गृह्यते इति विज्ञप्तस्तेन पाणी घर्षयित्वा चिरं तस्थे।

१८ अथ श्रीभोजः श्रीमाघपण्डि[3]तविद्वत्तां पुण्यवत्तां च सततमाक[4]र्ण्य तद्दर्शनोत्सुकतया राजादेशैः सततं प्रेष्यमाणैः श्रीमालनगराद्धिमसमये समानीय सबहुमानं भोजनादिभिः सत्कृत्य तदनु राजोचितान्विनोदान्दर्शयन्, रात्रावारात्रिकावसरानन्तरं संनिहिते स्वसंनिभे पल्यङ्के माघपण्डितं नियोज्य तस्मै स्वशीतरक्षामुपनीय प्रियालापांश्चिरं कुर्वाणः सुखं सुखेन सुष्वाप। प्रातर्माङ्गल्यतूर्यनिर्घोषैर्विनिद्रं नृपं स्वस्थानगमनाय माघपण्डित आपृष्टवान्। विस्मयापन्नहृदयेन राज्ञा दिने भोजनाच्छादनादिसुखं पृष्टः स कदन्नसदन्नवार्त्ताभिरलं शीतरक्षाभारे[5]ण श्रान्तं विज्ञपयन्खिद्यमानेन राज्ञा कथं कथञ्चिदनुज्ञातः पुरोपवनं यावद्भूभुजानुगम्यमानः माघपण्डितेन स्वागमनप्रसादेन संभावनीयोऽहमिति विज्ञप्य[6] नृपानुज्ञातः स्वं पदं भेजे। तदनु कतिपयदिनैः श्रीभोजस्तद्विभवभोगसामग्रीदिदृक्षया श्रीश्रीमालनगरं प्राप्तः। माघपण्डितेन प्रत्युद्गमादियथोचितभक्त्याऽऽवर्जितः ससैन्यस्तन्मन्दुरायां ममौ। स्वयं तु माघपण्डितस्य सौधमध्यास्य संचारकभुवं काञ्चन[7]बद्धामवलोक्य स्नानादनु देवतावसरो-

१ निश्चलदृशं P H २ करिण्यः L ३ कुमुदपण्डितसुतमाघ d ४ आकर्णयत् C ५ शीतभारेण P ६ विज्ञप्तो P ७ काचबद्धां H K

र्वी मणिमरकतकुट्टिमशैवलवल्लरीयुग्जलभ्रान्त्या धौताम्बरीयं संवृण्वन् सौवस्तिकेन ज्ञापितवृत्तान्तस्तदैव तद्देवतार्चानन्तरं निवृत्ते मन्त्रावसरेऽशनसमयसमागतां रसवतीमास्वादमान अकालिकैरदेशजैर्व्यञ्जनैः फलादिभिश्चित्रीयमानमानसः संस्कृतपयःशालिशालिनीं रसवतीमाकण्ठमुपभुज्य भोजनान्ते चन्द्रशालामधिरुह्याश्रुतादृष्टपूर्वकाव्यकथाप्रबन्धप्रेक्षादीनि प्रेक्षमाणः शिशिरसमयेऽपि संजाताकस्मिकग्रीष्मभ्रान्त्या[1] संवीतसितस्वच्छवसनस्तालवृन्तकरैरनुचरैर्वीज्यमानोऽमन्दचन्दनालेपनेपथ्यः सुखनिद्रया तां क्षणदां क्षणमिवातिवाह्य प्रत्यूषे शङ्खनिस्वनाद्विगतनिद्रो हिमसमये ग्रीष्मावतारव्यतिकरो[2] माघपण्डितेन ज्ञापितः प्रतिसमयं सविस्मयः कति दिनान्यवस्थाय स्वदेशगमनायापृच्छन् स्वयं करिष्यमाण[3]नव्यभोजस्वामिप्रासाद[4]प्रदत्तपुण्यो मालवमण्डलं प्रति प्रतस्थे ।

तथा निजजन्मदिने जनकेन नैमित्तिकाज्जातके कार्यमाणे पूर्वमुदितोदितसमृद्धिर्भूत्वा प्रान्ते गलितविभवः किंचिच्चरणयोराविर्भूतश्वयथुविकारः पञ्चत्वमाप्स्यतीति निमित्तविदा निवेदितां[5] विभवसंभारेण तां ग्रहगतिं निराचिकीर्षुणा माघपित्रा संवत्सरशतप्रमाणे मनुजायुषि षट्त्रिंशत्सहस्राणि दिनानि भविष्यन्तीति विमृश्य नाणकपरिपूर्णांस्तावत्संख्यान् हारकान् कारितनव्यकोशेषु निवेश्य तदधिकां परां भूतिं शतशः समर्प्य प्रदत्तमाघनाम्ने सुताय कुलोचितां शिक्षां वितीर्य कृतकृत्यमानिना तेन विपेदे । तदनन्तरमुत्तराशापतिरिव प्राज्यसाम्राज्यो[6] विद्वज्जनेभ्यः श्रियं तदिच्छया यच्छन्नमानैर्दानैरर्थिसार्थं कृतार्थयंस्तैर्भोगविधिभिः[7] स्वममानुषावतारमिव दर्शयन् विरचितशिशुपालवधाभिधानमहाकाव्यचमत्कृतविद्वज्जनः स प्रान्ते पुण्यक्षयात्क्षीणवित्तो विपत्तिपाते स्वविषये स्थातुमप्रभूष्णुः सकलत्रो माल-

१ भीष्मोष्मभ्रान्त्या a K H २ व्यतिकरं K ३ कारित K L ४ प्रसाद P ५ निवेदिते a K ६ प्राप्त प्राज्य साम्राज्यो K L ७ तैस्तैः a K

वमण्डले गत्वा धारायां कृतावासः पुस्तकग्रहणकार्पणपूर्वकं श्रीभोजात्कि-यदपि द्रव्यमानेयमिति तत्र पत्नीं प्रस्थाप्य यावत्तदाशया माघपण्डितश्चिरं तस्थौ तावत्तथावस्थां श्रीभोजस्तत्पत्नीं विलोक्य ससंभ्रमः शलाकान्यासेन तत्पुस्तकमुन्मुद्य काव्यमद्राक्षीत्—

३७) कुमुद्वनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकःप्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिललितानां ही विचित्रो विपाकः*॥

अथ काव्यार्थमवगम्य का कथा ग्रन्थस्य केवलमस्यैव काव्यस्य वि-श्वम्भरामूल्यमल्पं । समयोचितस्यानुच्छिष्टस्य हीशब्दस्य पारितोषिके क्षितिपतिर्लक्षद्रव्यं वितीर्य तां विससर्ज । सापि ततः संचरन्ती विदितमाघ-पण्डितपत्नी कैश्चिद्भिरर्थिभिर्याच्यमाना तत्पारितोषिकं तेभ्यः समस्तमपि वितीर्य यथावस्थिता गृहमुपेयुषी तद्वृत्तान्तं विज्ञापनापूर्वं किञ्चिच्चरणस्फुर-च्छोफाय पत्ये निवेदयामास । अथ त्वमेव मे शरीरिणी कीर्त्तिरिति श्ला-घमानस्तदा स्वगृहमागतं कमपि भिक्षुं वीक्ष्य भुवने तदुचितं किमपि देयमपश्यन् संजातनिर्वेद इदमवादीत्—

३८) Tअर्था न सन्ति न च मुञ्चति मां दुराशा
दानान्न[2] सङ्कुचति दुर्ललितः करो मे ।
याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवितेन ॥ १ ॥

---

१ अयं कथाभागः भोजप्रबन्धेऽपि वर्तते ( पृ. ६३ ) * पद्यमिदं माघकृते शिशुपालवधे वर्तते

T ३८,३९ श्लोकौ माघकवेरिति शार्ङ्गधरपद्धत्यां ( ४०७,४०६ ) भोजप्र-बन्धेऽपि ( २८१,२८२ ) सुभाषितावल्यां ( ३१८० ) कस्यापीति

२ दानाद्वि P त्यागान्नसङ्कुचति L त्यागान्नसंचलति दुर्ललितं मनो मे । H

३९) दारिद्र्यानलसंतापः शान्तः संतोषवारिणा ।
दीनाशाभङ्गजन्मा तु केनायमुपशाम्यतु ॥ २ ॥

४०) न भिक्षा दुर्भिक्षे पतति, दुरवस्थाः कथमृणं
लभन्ते, कर्माणि क्षितिपरिवृढान्कारयति कः ।
अदत्त्वापि ग्रासं ग्रहपतिरसावस्तमयते
क्व यामः किं कुर्मो गृहिणि गहनो जीवितविधिः ॥ ३ ॥

४१) क्षुत्क्षामःपथिको मदीयभवनं पृच्छन्कुतोऽप्यागतः
तत्किं गेहिनि किंचिदस्ति यदयं भुङ्क्ते बुभुक्षातुरः ।
वाचास्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः
स्थूलस्थूलविलोललोचनगलद्बाष्पाम्भसां बिन्दुभिः ॥ ४ ॥

४२) *व्रजत व्रजत प्राणा अर्थिनि व्यर्थतां गते ।
पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः ॥ ५ ॥

इति[3] तद्वाक्यान्त एव स माघपण्डितः पञ्चत्वमवाप । प्रातस्तं वृत्तान्तमवगम्य श्रीभोजेन श्रीमालेषु सजातिषु धनवत्सु सत्सु तस्मिन्पुरुषरत्ने विनष्टे क्षुधाबाधिते सति भिल्लमाल इति तज्जातेर्नाम निर्ममे ॥

१९ पुरा समृद्धिविशालायां विशालायां पुरि मध्यदेशजन्मा साकाश्यगोत्रः[4] सर्वदेवनामा द्विजो निवसन् जैनदर्शनसंसर्गात्प्रायः प्रशान्तमिथ्यात्वो धनपालशोभनपुत्रद्वयेनान्वितः कदाचिदागताञ्श्रीवर्द्धमानसूरीन्गुणानुरागान्निजोपाश्रये निवास्य निर्द्वन्द्वभक्त्या परितोषितान्सर्वज्ञपुत्रानिति धिया तिरोहितं निजपूर्वजानिधिं पृच्छंस्तैर्वचनच्छलेनार्धविभागं याचितः संकेतनिवेदनाल्लब्धनिधिस्तदर्धं यच्छंस्तैः पुत्रद्वयादर्धं याचितो ज्यायसा धनपालेन मिथ्यात्वान्धमतिना जैनमार्गनिन्दापरेण निषिद्धः कनीयसि शोभने

१ जलैर्वा P * पद्यमिदं भोजप्रबन्धेऽपि वर्तते ( २८३ ) २ कवसार्थः पुनरीदृश इति वाक्यान्ते H ३ तज्ज्ञातेर्नाम P ४ काश्यपगोत्रः P ५ शोभनाभिधान H

कृपापरः स्वप्रतिज्ञाभङ्गपातकं तीर्थेषु क्षालयितुमिच्छुः प्रतितीर्थं प्रतस्थे । अथ पितृभक्तेन शोभननाम्ना लघुपुत्रेण तं तदाग्रहान्निषिध्य पितुः प्रतिज्ञां प्रतिपालयितुमुपात्तव्रतः स्वयं तान्गुरूननुससार ॥

अभ्यस्तसमस्तविद्यास्थानेन धनपालेन श्रीभोजप्रसादसंप्राप्तसमस्तपण्डितप्रकृष्टप्रतिष्ठेन निजसहोदरामर्षभावाद्द्वादशाब्दीं यावत्स्वदेशनिषिद्धजैनदर्शनप्रवेशेन तद्देशोपासकैरत्यर्थमभ्यर्थनया गुरुपुरुषेष्वाहूयमानेषु सकलसिद्धान्तपारावारपारदृश्वा स शोभननामा तपोधनो गुरूनापृच्छ्य तत्र प्रयातो धारायां प्रविशन् पण्डितधनपालेन राजपाटिकायां व्रजता तं सहोदरमित्यनुपलक्ष्य सोपहासं "गर्दभदन्त भदन्त नमस्ते" इति प्रोक्ते "कपिवृषणास्य वयस्य सुखं ते" इति शोभनमुनेर्वचसान्तश्चमत्कृतो मया नर्मणापि नमस्ते इत्युक्तेऽनेन तु वयस्य सुखं ते इत्युच्चरता वचनचातुर्यान्निर्जितोऽस्मीति । तत्कस्यातिथयो यूयमिति धनपालस्यालापैर्भवत एवातिथयो वयमिति शोभनमुनेर्वाचमाकर्ण्य बटुना सह निजसौधे प्रस्थाप्य तत्रैव स्थापितः । स्वयं सौधे समागत्य धनपालः प्रियालापैः सपरिकरमपि तं भोजनाय निमन्त्रयंस्तैः प्रासुकाहारसेवापरैर्निषिद्धः[1] । बलाद्दोषहेतुं पृच्छन्—

४३) भजेन्माधुकरीं वृत्तिं मुनिर्म्लेच्छकुलादपि ।
एकान्नं नैव भुञ्जीत बृहस्पतिसमादपि ॥

तथाच जैनसमये दशवैकालिके—

४४) महुकारसमा बुद्धा जे भवन्ति अणिस्सिया ।
नाणापिण्डरया दन्ता तेण वुच्चन्ति साहुणो ॥

इति स्वसमयपरसमयाभ्यां निषिद्धं कल्पितमाहारं परिहरन्तः शुद्धाशनभोजिनो वयमिति तच्चरित्रचित्रितमनाः सतूष्णीकमुत्थाय सौधमाप । मज्जनारम्भे गोचरचर्यया समागतं तन्मुनिद्वन्द्वमवलोक्यासिद्धे[2]ऽन्नपाके

१ प्रष्ठ L K २ मवलोक्यसिद्धे P

तद्ब्राह्मण्योपढौकिते दध्नि, मुनिभ्यां व्यतीतकियद्दिनमेतदिति पृच्छ्यमाने, धनपालः 'किमत्र पूतराः सन्तीति' सोपहासमभिदधानो, व्यतीतदिनद्वयमेतदिति ब्राह्मण्या निर्णीय प्रोक्ते। ताभ्यां पूतराः सन्त्यत्रेत्यभिहिते स्नानासनात्तद्दर्शनार्थमुत्थाय तत्रागतः सन् स्थालेऽधिरोपितदधिसंनिधौ यावद्यावकपुम्भेऽधिरूढैस्तद्वर्णजन्तुभिर्दधिपिण्डइव पाण्डुरतामालोक्य जिनधर्मे जीवदयाप्राधान्यं तत्रापि जीवोत्पत्तिज्ञानवैदग्ध्यं । यतः—

४५) मुग्गमासाइपमुहं विदिलं कच्चम्मिं गोरसे पडइ ।
ता तसजीवुप्पत्ती भणन्ति दहिए तिदिणुव्वरिएं ॥

तज्जिनशासने एवेति निश्चित्य शोभनमुनेः शोभनबोधात्सम्यक्प्रतिपत्तिपुरःसरं सम्यक्त्वं भेजे। कर्मप्रकृत्यादिजैनविचारग्रन्थेषु प्रकृत्या प्राज्ञः परं प्रावीण्यमुद्वहन्, प्रातः प्रातर्जिनार्चावसरप्रान्ते—

४६) *कतिपयपुरस्वामी कायव्ययैरपि दुर्ग्रहो
मतिवितरता मोहेनाहो मयानुसृतः पुरा ।
त्रिभुवनपतिर्बुद्ध्याराध्योऽधुना स्वपदप्रदः
प्रभुरधिगतस्तत्प्राचीनो दुनोति दिनव्ययः ॥ १ ॥

४७) सव्वत्थ अत्थि धम्मो जा मुणियं जिन न सासणं तुम्ह ।
कणगाउराण कणगु व्वं ससियपयमलम्भमाणाणं ॥ २ ॥

४८) देशाधीशो ग्राममेकं ददाति
ग्रामाधीशः क्षेत्रमेकं ददाति ।
क्षेत्राधीशः शिम्बिकाः संप्रदत्ते
सर्वस्तुष्टः संपदं स्वां ददाति ॥ ३ ॥

---

१ सन्तीत्यत्रेत्य P २ पभिई c ३ खटम्मि c ४ वितिदिण्डवरि c ५ सम्यक्तत्त्वं भेजे a K ६ मितवितरिता मोहेन K a * पद्यमिदं प्रभावकचरिते महेन्द्रसूरिप्रबन्धेऽप्यस्ति ( ११४ )

७ सव्वत्थ c ८ कणगं व. ९ सेतिकां a शाकमात्रं b १० सर्वज्ञः

इत्यादीनि वाक्यानि पठन्स धनपालः ॥

२० कदाचिन्नृपेण सह मृगयां नीतो धनपालोऽभिहितः—

४९) *किं कारणं नु धनपाल[१] मृगा यदेते
व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः ।
देव त्वदस्त्रचकिताः श्रयितुं स्वजाति-
मेके मृगाङ्कमृगमादिवराहमन्ये ॥

राज्ञा बाणेन मृगे विद्धे सति तद्वर्णनाय विलोकितमुखो धनपालः प्राह—

५०) ‡रसातलं यातु तवात्र पौरुषं
कुनीतिरेषा शरणो[२] ह्यदोषवान् ।
निहन्यते यद्बलिनापि दुर्बलो
ह हा महाकष्टमराजकं जगत् ॥

इति तन्निर्भर्त्सनात्क्रुद्धो नृपः किमेतदित्यभिदधाने—

५१) [३]वैरिणोऽपि[४] हि मुच्यन्ते प्राणान्ते तृणभक्षणात् ।
तृणाहाराः सदैवैते हन्यन्ते पशवः कथम् ॥

इत्यूचेऽतोऽद्भुतसंजातकृपेण नृपेण धनुर्बाणभङ्गमङ्गीकृत्याजीवितान्तं संन्यस्तमृगयाव्यसनेन पुरं प्रत्यागच्छता तत्र यज्ञमण्डपे यज्ञस्तम्भनियन्त्रितच्छागस्य दीनां गिरमाकर्ण्य किं पशुरसौ व्याहरतीत्यादिष्टः स धनपालोऽ[५]वधेहीति प्राह—

---

* वाग्भटरचिते काव्यानुशासने ( पृ-११ ) प्युदाहृतं पद्यमिदम्

१ कविराज b c H २ शरणागतः ३ अत्र धनपालः—रसातलमित्यादि॰ तन्निर्भर्त्सनात्क्रुद्धो नृपः किमेतदित्यभिदधानः वैरिणोपि—॰ c ४ वैरिणापि P ५ धनपालः प्राह B

‡ पद्यमिदं प्रभावकचरिते महेन्द्रसूरिप्रबन्धे (१५०) प्यस्ति

५२) T नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया
संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥

इति तद्वाक्यानन्तरं राज्ञा किमेतदिति भूयोऽभियुक्तः—

५३) यूपं कृत्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥ १ ॥

५४) सत्यं यूपं तपो ह्यग्निः कर्माणि[1] समिधो मम ।
अहिंसामाहुतिं दद्यादेवं यज्ञः सतां मतः[2] ॥ २ ॥

इत्यादि शुकसंवादोदितानि[3] वचांसि नरेन्द्रस्य पुरतः पठन् हिंसाशास्त्रोपदेशिनो हिंसकप्रकृतीन्ब्राह्मणरूपेण राक्षसांस्ताञ्ज्ञापयन्नृपमर्हद्धर्माभिमुखं चकार ॥

**२१** अथ कस्मिन्नप्यवसरे नरेश्वरः सरस्वतीकण्ठाभरणप्रासादे व्रजन्सदा सर्वज्ञशासनप्रशंसापरं पण्डितं धनपालमालपत् । सर्वज्ञस्तावत्कदाचिदासीत्तद्दर्शने साम्प्रतं कश्चिज्ज्ञानातिशयोऽस्तीत्यभिहिते, अर्हत्कृतेऽर्हच्चूडामणिग्रन्थे[4] विश्वत्रयस्य त्रिकालवस्तुविषयस्वरूपपरिज्ञानमद्यापि विद्यत इति तेनोक्ते, त्रिद्वारमण्डपे स्थितः कस्मिन्द्वारेऽस्माकं निर्गम इति शास्त्रकलङ्कारोपणोद्यते नृपे बुद्धिमात्रा[5] त्रयोदशीति पाठं सत्यापयता भूर्जपत्रे नृपप्रश्नानिर्णयमालिख्य मृण्मयगोलके निधाय च छगिकाधरस्य तं समर्प्य देव पादोऽवधार्यतामिति नृपं प्राह । नृपस्तद्बुद्धि[6]संकटे निपतितं स्वं मन्यमान एतद्द्वारत्रयस्य मध्यात्किमपि निर्णीतं भविष्यतीति विमृश्य सूत्रभृ-

---

T पद्यमिदं प्रभावकचरिते महेन्द्रसूरिप्रबन्धे (१२८) ऽप्यस्ति

१ प्राणाः समिधयो C २ एष यज्ञः सनातनः B K ३ श्रुतिसंवाद० B H
४ अर्हन्तश्रीचूडामणिनामनि d ५ निर्णयस्तु बुद्धिमात्रगम्य इति लोकोक्तिः, तत्स्थानेऽधुना सर्वसिद्धा त्रयोदशीति ज्योतिर्विदः । इति प्रथमसंस्कर्ता ६ नृपस्तु बुद्धि K

द्भिर्मण्डपपञ्चशिलातलमपनीय तन्मार्गेण निर्गत्य तं गोलकं भित्त्वा तेष्वक्षरेषु तमेवनिर्गमनिर्णयं वाचयंस्तत्कौतुकोत्तालचित्तः श्रीजिनशासनमेव प्रशशंस। तथाहि—

९९) द्वाभ्यां यन्न हरिस्त्रिभिर्न च हरः स्रष्टा न चैवाष्टभि-
र्यन्न द्वादशभिर्गुहो न दशकद्वन्द्वेन लङ्कापतिः।
प्रश्नेन्द्रो दशभिः शतैर्न जनता नेत्रैरसंख्यैरपि
तत्प्रज्ञानयनेन पश्यति बुधश्चैकेन वस्तु स्फुटम्॥[1]

२२ अथ धनपालः ऋषभपञ्चाशिकास्तुतिं[2] निर्माय, सरस्वतीकण्ठाभरणप्रासादे स्वनिर्मितप्रशस्तिपट्टिकां[3] राज्ञे कदाचिद्दर्शयामास तत्र।

---

१ मु. जि. F आदर्शेऽत्र निम्नलिखितमधिकं कथनमुपलभ्यते–
अन्यदा जलाश्रयपृच्छा–

सत्यं वप्रेषु शीतं शशिकरधवलं वारि पीत्वा प्रकामं
व्युच्छिन्ना शेषतृष्णा प्रमुदितमनसः प्राणिसार्था भवन्ति।
शोषं नीते जलौघे दिनकरकिरणैर्यान्त्यनन्ता विनाशं
तेनोदासीनभावं भजति मुनिगणः कूपवप्रादिकार्ये॥

कदाचित् स्वकारितप्रौढतरनवसरसि गतो नृपः, कीदृगिदं धर्मस्थानमिति पृच्छति। धनपालः प्राह–

एषा तटाकमिषतावकदानशाला मत्स्यादयो रसवती प्रगुणा सदैव।
पात्राणि यत्र बकसारसचक्रवाकाः पुण्यं कियद् भवति तत्तु वयं न विद्मः॥

तथातश्चुकोप। पुरमागच्छन् मार्गे बालिकासहितां वृद्धां जरया शिरो धूनयन्तीं दृष्ट्वा नृपः पृच्छति–किं शिरो धूनयति। ततो धनपालः–

किं नन्दी किं मुरारिः किमु रतिरमणः किं विधुः किं विधाता
किं वा विद्याधरोऽसौ किमुत सुरपतिः किं नलः किं कुबेरः।
नायं नायं न चायं न खलु नहि न वा नापि नासौ न चासौ
क्रीडां कर्तुं प्रवृत्तः स्वयमपि च हले भूपतिर्भोजदेवः॥

अनेन नृपं हृष्टं तोषयामास।

२ धनपालरचिता ऋषभपञ्चाशिका अद्याप्युपलभ्यते ३. पट्टिकायांकदाचिन्नृपः C

५६) अभ्युद्धृता वसुमती दलितं रिपूरः
क्रोडीकृता वलवता बलिराज्यलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना
जन्मत्रये यदकरोत्पुरुषः पुराणः ॥ *

काव्यमिदं निर्वर्ण्य पारितोषिके तस्याः पट्टिकायाः काञ्चनकलशं ददौ नृपः । तस्मात्प्रासादादपसरंस्तदीयद्वारखत्तके रत्या सह हस्तताल्दानपरं स्मरं मूर्त्तिमन्तमालोक्य नृपेण हासहेतुं पृष्टः पण्डितः प्राह—

५७) ‡स एव भुवनत्रयप्रथितसंयमः शंकरो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः[1] स्मरः ॥ १ ॥

२३)५८) अन्नदिणे सिवभवणे दुवारदेसे निए वि भङ्गिगणं ।
किं दुब्बलो पलोइअ निवपुट्ठो भणइ धणपालो ॥ २ ॥

५९) दिग्[2]वासा यदि तत्किमस्य धनुषा तच्चेत्कृतं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं पुनर्द्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमहो पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरापिनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥ ३ ॥

६०) पाँणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति ।
अङ्कुरित इव मनोभूर्यस्मिन्भस्मांवशेषोऽपि ॥ ४ ॥

---

* पद्यमिदं भोजप्रबन्धे ( २१६ ) प्यस्ति

१ हास्य c d

‡ प्रभावकचरिते महेन्द्रसुरिप्रबन्धे ( १६२ ) तथा च हैमकाव्यानुशासने टीकायां विद्यते पद्यमिदम्

२ सुभाषितावल्यां (२३९९) पद्यमिदं वर्तते प्रभावकचरिते च श्रीमहेन्द्रसुरिप्रबन्धे ( १२० ) ३ गोवर्द्धनसप्तशत्यामिदम्

६१) *अमेध्यमश्नाति विवेकशून्या
स्वनन्दनं कामयतेऽतिसक्ता ।
खुराग्रशृङ्गैर्विनिहन्ति जन्तून्
गौर्वन्द्यते केन गुणेन राजन् ॥ १ ॥

६२) पयःप्रदानसामर्थ्याद्वन्द्या चेन्महिषी न किम् ।
विशेषो दृश्यते नास्या महिषीतो मनागपि ॥ २ ॥

२४ इत्यादिभिः प्रसिद्धसिद्धसारस्वतोद्गारैर्नृपं रञ्जयन् यावदास्ते तावत्कोऽपि सांयात्रिको द्वाःस्थनिवेदितः सभां प्रविश्य नृपं नत्वा मदनपट्टिकायां प्रशस्तिकाव्यानि दर्शयामास । नृपेण तल्लाभस्थानके पृष्ठे स एवमवादीत् । नीरधावकस्मादेव मम वाहने स्खलिते निर्यामकैः शोध्यमाने समुद्रे तन्मग्नं शिवायतनमालोक्य परितः परिस्फुरज्जलमप्यन्तः सलिलविकलमवलोक्य कस्यामपि भित्तौ वर्णान्निर्वर्ण्य च तज्जिज्ञासया मदनपट्टिकां तत्र प्रस्थाप्य तत्कान्ताक्षरमयी पट्टिकेयमिति नृपतिर्निशम्य तदुपरि मृन्मयीं पट्टिकां नियोज्य तत्र पतितान्वर्णान्पाण्डितैर्वाचयामास ॥

* ६१,६२ श्लोकौ H आदर्शे न दृश्येते
१ असत्युत्तमांगे कथंमूर्ध्नि माला
अभालस्य भाले कथं पट्टबन्धः ।
अकर्णस्य कर्णे कथं गीतनृत्ये ।
अपादस्य पादे कथं मे प्रणामः ॥
इत्यधिकमेकं पद्यं a आदर्शे मु. जि. F आदर्शे निम्नलिखितेऽपद्ये व्यधिके
स्पर्शोऽमेध्यभुजां गवामघहरो वन्द्या विसंज्ञा द्रुमाः
स्वर्गं छागवधाद् धिनोति च पितॄन्विप्रोपभुक्ताशनम् ।
आप्ताश्छद्मपराः सुराः शिखिहुतं प्रीणाति देवान्हविः
स्फीतं फल्गु च वल्गु च श्रुतिगिरां को वेत्ति लीलायितम् ॥ १ ॥
वधो धर्मो जलं तीर्थं गौर्नमस्या गुरुर्गृही ।
अग्निर्देवो द्विजः पात्रं येषां तैः कोऽस्तु संस्तवः ॥ २ ॥
२ मीणपट्टीति लोकोक्तौ ३ तन्निमग्नं D ४ तत्संकेताक्षरमयी B तत्कान्ताक्षरमयी P ५ विपरीतान् a b

६३) आबाल्याधिगमान्मयैव गमितः कोटिं परामुन्नते-
रस्मत्संकथयैव पार्थिवसुतः सम्प्रत्यसौ लज्जते ।
इत्थं खिन्न इवात्मजेन यशसा दत्तावलम्बोऽम्बुधे-
र्यातस्तीरतपोवनानि तपसे वृद्धो[1] गुणानां गणः ॥ १ ॥

६४) देवे दिग्विजयोद्यते धृतधनुः प्रत्यर्थिसीमन्तिनी-
वैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति ।
आस्तामन्यनितम्बिनी रतिरपि[2] त्रासान्न पौष्पं करे
भर्तुर्धर्तुमदान्मदान्धमधुपीनीलीनिचोलं धनुः ॥ २ ॥

६५) चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्ट-
व्याकृष्टं निःश्वसन्त्यः पृथु[3]नयनघटीयन्त्रमुक्ताश्रुधारम् ।
नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेतौ[4]
देव त्वद्वैरिनार्यः स्तनकलशयुगेनाऽविरामं[5] वहन्ति ॥ ३ ॥

इति संपूर्णेषु काव्येषु वाच्यमानेषु ।

६६) अयि खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्मणां विपाकः ।

अस्य काव्यस्योत्तरार्धं छिन्नपादिभिः[6] परःशतैरपि पण्डितैः परिपूर्यमाणमपि विसंवदतीति राज्ञा धनपालपण्डितः पृष्टः ।

हरशिरसि शिरांसि यानि रेजु—
र्हरि हरि तानि लुठन्ति गृध्रपादैः[7] ॥ १ ॥

इदमेवोत्तरार्धं संवदतीति नृपेणोक्ते सति स पण्डितः प्रोवाच । यदि गुम्फार्थाभ्यां श्रीरामेश्वरप्रशस्तिभित्ताविदं न भवति तदतःपरमाजी-

---

१ वृद्धिं प्राप्तो जरठश्च २ रतिरति d ३ मृदु B ४ एतत B ५ अभिरामं B ६ छिन्नपदसंपादनशीलैः ७ हनुमन्नाटके ( अं. १४ श्लो. ४९ ), भोजप्रबन्धे १४९५ संस्करणे ( पृ. २१६ ) च दृश्यते तत्र च कालिदासकविना पूरितमुत्तरार्धमिति कथितम्

वितान्तं कवित्वस्य संन्यास एवेति तत्प्रतिश्रवसमकालमेव यानपात्रे निर्यामकान्निक्षेप्यावगाह्यमाने नीरधौ षड्भिर्मासैस्तं प्रासादमासाद्य पुनर्भदनपट्टिकायां न्यस्तायामिदमेवोत्तरार्धमागतमालोक्य तस्मै तदुचितं पारितोषिकं प्रसादीचकार ॥ इति खण्डप्रशस्तेर्यथाश्रुतानि बहूनि काव्यानि मन्तव्यानि ॥

२९ कदाचिद्राज्ञा सेवाश्लथतां पृष्टः, स्वं[1] पण्डितास्तिलकमञ्जरीगु[2]म्फवैयग्र्यं जगौ। शिशिरयामिन्याश्चरमयामे निर्विनोदत्वात्तां प्रथमादर्शप्रतिमानीय पण्डितेन व्याख्यायमानां तिलकमञ्जरीकथां वाचयंस्तद्रसनिपातभीरुः पुस्तकस्याधः कच्चोलकयुतसुवर्णस्थालस्थापनापूर्वं तां समाप्य तच्चित्रकविताचित्रीयमाणचित्तो नृपः पण्डितं प्राह। मामत्र कथानायकं कुर्वन् विनतायाः पदेऽवन्तीमारोपयन् शक्रावतारतीर्थस्य पदे महाकालमाकलयन् यद्याचसे तत्तुभ्यं ददामीत्यभिदधाने नृपे खद्योतप्रद्योतनयोः सर्षपकनकाचलयोः काचकाञ्चनयोः धत्तूरकल्पपादपयोरिव तेषां महदन्तरमित्युच्चरन्—

६७) दोमुहय* निरक्खर लोहमइयं[3] नाराय तुज्झ किं[4] भणिमो।
गुञ्जाहि समं कणयं तोलन्तु न गउसि पायालं ॥

इत्याक्रोशपरे तस्मिन् जाज्वल्यमानेऽग्नौ श्रीभोजः[5] तां मूलप्रतिमिन्धनीचकार। अथ स द्विधा निर्वेदभाग् द्विधाऽवाङ्मुखो निजसौधपश्चाद्भागे जीर्णमञ्चाधिरूढो निःश्वसन् भृशं सुष्वाप। बालपण्डितया तत्सुतया सभक्तिकमुत्थाप्य स्नानपानभोजननिर्मापणानन्तरं तिलकमञ्जरी* प्रथमादर्शलेखदर्शनात्[6]संस्मृत्य ग्रन्थस्यार्धं लेखयांचक्रे तदुत्तरार्धं नूतनीकृत्य ग्रन्थः समर्थितः ॥

---

१ सः C d २ ग्रन्थ H ३ लोहमयी a ४ कित्तिय B ५ श्रीभोजे P
* अयं तिलकमञ्जरीग्रन्थो मुद्रितः
६ प्रथमादर्शलेखनात् c d

२६ अन्यदा भोजसभायां काव्यमिदमुक्तं तेन—

६८) धाराधीश धरामहीशगणने कौतूहलीवानयं
वेधास्त्वद्गणनां चकार खटिकाखण्डेन रेखां दिवि ।
सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमिधवा-
भावात्त्यजति स्म सोयमवनीपीठे तुषाराचलः[1] ॥

अपरपण्डितैरस्मिन्काव्ये उपहसिते धनपालेनोक्तम्—

६९) *शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।
वस्तु प्रस्तुतमेव किंचन वयं ब्रूमस्तथाप्युच्चकै-
र्लोकोयं हसति प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः ॥

एकदा राजन्महाभारती कथा श्रूयतामित्युक्ते पण्डितं प्रति परमार्हतेन तेन प्रत्युक्तं—

७०)Tकानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नेतारः किल पञ्च गोलकसुताः कुण्डाः× स्वयं पाण्डवाः ।
तेमी पञ्च समानजानय इति ख्यातास्तदुत्कीर्तनं
पुण्यं स्वस्त्ययनं भवेद्यदि नृणां पापस्य कान्या गतिः ॥

२७ अधुना किमपि प्रबन्धादि क्रियमाणमास्ते नृपेणेत्युक्ते धनपालः प्राह—

७१) आरनालगलदाहशङ्कया
मन्मुखादपगता सरस्वती ।

---

१ पद्यमिदं भोजप्रबन्धे (२१०) प्यस्ति

* पद्यमिदं सदुक्तिकर्णामृते ५–३७३ धर्मकीर्तेरिति तत्र च पाठान्तरं तृतीये पदे 'वागर्थौ च तुलाधृताविव तथाप्यस्मत्प्रबन्धानयं' T पद्यमिदं सुभाषितावल्यां ३०४४ धर्मविवेकादुद्धृतं बोथलिंक महाशयेन (सुभाषितावलि notes p. 93) तत्र चतुर्थं पदं यथा—तेषां कीर्तनमामनन्ति मुनयो धर्मस्य सूक्ष्मा गतिः × अमृते जारजः कुण्डो मृते भर्तरि गोलकः १ समानजातय P २ भोजप्रबन्धे पद्यमिदं (२८८)

तेन वैरिकमलाकचग्रह—
व्यग्रहस्त न कवित्वमस्ति मे ॥ १ ॥

७२) वचनं धनपालस्य चन्दनं मलयस्य च ।
सरसं हृदि विन्यस्य कोऽभून्नाम न निर्वृतः ॥ २ ॥

अन्यदा सर्वाण्यपि दर्शनानि एकत्राहूय मुक्तिमार्गे पृष्टे ते स्वस्वदर्शनपक्षपातं ब्रुवाणाः सत्यमार्गजिज्ञासयैकीक्रियमाणाः षाण्मासीमवधीकृत्य श्रीशारदाराधनतत्पराः । कस्या अपि निशः[2]शेषे जागर्षीति व्याहृतिपूर्वमुत्थाप्य[3] सा नृपं—

७३) श्रोतव्यः सौगतो धर्मः कर्तव्यः पुनरार्हतः ।
वैदिको व्यवहर्तव्यो ध्यातव्यः[4] परमः शिवः ॥

अथवा ध्यातव्यं[5] पदमक्षयं । श्लोकममुं राज्ञे दर्शनिभ्यश्च समादिश्य श्रीभारती तिरोदधे ।

७४) अहिंसालक्षणो धर्मो मान्या देवी च भारती[6]
ध्यानेन मुक्तिमाप्नोति सर्वदर्शनिनां[7] मतम् ॥

इति श्लोकयुग्मं[8] निर्माय नृपाय निरपायनिर्णयं प्राहुः ॥

शोभनमुनेश्चतुर्विंशतिका[9] स्तुतिः प्रतीतैव* ।

२८ अथ तन्नगरनिवासिनी शीताभिधाना[10] रन्धनी कमपि विदेशवासिनं कार्पटिकं सूर्यपर्वणि पाकप्राशनमुपादाय[11] जलाश्रये कङ्गुणीतैलमास्वाद्य गृहमुपेत्य तद्वमनाद्विपन्नमालोक्य[12] सद्रव्यमित्युत्पद्यमानकलङ्कश-

---

१ सोमेश्वरकृतकीर्तिकौमुद्यामपि दृश्यते पद्यमिदं (१–१६) २ निशा C ३ व्याहृतः C d ४ धातव्यः P ५ धातव्यं P ६ सरस्वती C d ७ ध्यानेन मुक्तिमार्गः स्यादेवं C D ८ युग्मश्लोकमुक्त्वा देवी तिरोधत्त D ९ शोभनचतु b D

* इयं चतुर्विंशिका काव्यमालायां मुद्रिता

१० शीता (सीता) भोजप्रबन्धेपि १८९५ संस्करणे वर्णिता (पृ.८८,८९,१४७,२०४)
११ उपनीय D १२ कार्पटिकं पाकाय तस्या गृहेऽन्नं कारयित्वा निशि घृतकुपिकव्यत्ययेन काङ्गुणीतैलं परिवेषितं इति वाक्यार्थो भासते इति प्रथमसंस्कर्ता

ङ्काकुलतया पञ्चत्वाय तदशनमेवं[1] बुभुजे । तस्मिन्स्थिरे प्रादुर्भूत[2]प्रातिभवैभवा विद्यात्रयीं रघुवात्स्यायनकामशास्त्रचाणाक्यनीतिशास्त्रमीषत्समभ्यस्य च नवयौवनया विजयाभिधानया विदुष्या[5] स्वसुतया सार्धं श्रीभोजस्य सदः शृङ्गारयन्ती श्रीभोजं प्रति प्राह—

७५) शौर्यं शत्रुकुलक्षयावधि यशो ब्रह्माण्डभाण्डावधि
त्यागस्तर्कुकं[3]वाञ्छितावधिरियं[4] क्षोणी समुद्रावधिः ।
श्रद्धा पर्वतपुत्रिकापतिपदद्वन्द्वप्रमाणावधिः
श्रीमद्भोजमहीपतेर्निरवधिः शेषो गुणानां गणः ॥

अथ विनोदप्रियेण राज्ञा कुचवर्णनाय नियुक्ता विजया प्राह—

७६) उन्नाहश्चिबुकावधिर्भुजलतामूलावधिः संभवो
विस्तारो हृदयावधिः कमलिनीसूत्रावधिः संहतिः ।
वर्णः स्वर्णकथा[6]वधिः कठिनता वज्राकरक्ष्मावधि-
स्तन्वङ्ग्याः स्तनमण्डले यदपरं[7] लावण्यमस्तावधि ॥

इति तद्वर्णनात्ते[8]नार्धिकविना राज्ञा—

७७) किं वर्ण्यते कुचद्वन्द्वमस्याः कमलचक्षुषः ।

तयोक्तम्—

सप्तद्वीपकरग्राही भवान् यत्र करप्रदः ॥

राज्ञा—

७८) प्रहतमुरजमन्द्रध्वानवद्भिः पयोदैः
कथमलिकुलनीलैः सैव दिग् संप्ररुद्धा ।

तयोक्तम्—

प्रथमविरहखेदम्लायिनी यत्र बाला
वसति नयनवान्तैरश्रुभिर्धौतवक्त्रा ॥

---

१ तद्गमनमेव P  २ प्रभूत C D  ३ तर्कुकः=याचकः  ४ रिति.  ५ अनुपुष्पा D  ६ कषावधिः a b  ७ कुचमण्डले किमपरं a  ८ तद्वर्णनाकर्णनात् C D

७९) *सुरताय नमस्तस्मै जगदानन्ददायिने ।

इति प्रोक्ते—

आनुषङ्गि फलं यस्य भोजराज भवादृशाः ॥

इति विजययोक्ते राजा सत्रपमधोमुख[1]ः तस्थौ । ततो राजा तां भोगिनीं चक्रे ।

अन्यदा तया जालान्तरे, चन्द्रकरस्पर्शेऽपाठि—

८०) †अलं कलङ्कशृङ्गार करस्पर्शनलीलया ।

चन्द्र चण्डीशनिर्माल्यमसि न स्पर्शमर्हसि ॥

इत्यत्र बहु वक्तव्यं परंपरया तत्तु ज्ञातव्यम् ॥

इति शीता ( सीता ) पण्डिताप्रबन्धः ॥

२९ अथ मयूरबाणाभिधानौ भावुकशालकौ पण्डितौ निजविद्वत्तया मिथः स्पर्धमानौ नृपसदसि लब्धप्रतिष्ठावभूतां कदाचिद्बाणपण्डितो जामिमिलनाय तद्गृहं गतो निशि द्वारप्रसुप्तो भावुकेनानुनीयमानां जामिं निशम्य तत्र दत्तावधान इत्यश्रृणोत्—

८१) ×गतप्राया रात्रिः कृशतनु शशी शीर्यत इव

प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव ।

प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो

इति भूयो भूयस्तेन त्रिपदीमुदीर्यमाणामाकर्ण्य ।

कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥

इति भ्रातृमुखात्तूर्यं पदमाकर्ण्य क्रुद्धा सा सत्रपा च कुष्ठी भवेति तं भ्रातरं शशाप इति । पतिव्रताव्रतप्रभावात्तदात्वप्रसूतरोगः[3] प्रातः शीतरक्षा-

---

* भोजप्रबन्धे वर्तते पद्यमिदं (२८९) शार्ङ्गधर पद्धत्यां (५११) सरस्वतीकुटुम्बदुहितुरिति १ मुखं C D † वाग्भटालंकारेऽप्युदाहृतं पद्यमिदम् × सुभाषितावल्यां (१६१२) बाणस्येति शार्ङ्गधरपद्धत्यां ( ३७१३ ) न कस्यापीति २ इमां H ३ तदात्वे प्रसूतप्रसूतरोगः C D तदा च प्रसूतप्रसूतरोगः H B

पिहिततनुर्नृपसभायामायातो मयूरेण मयूरेणेव कोमलगिरा वरकोढीति[1] तं प्राकृतशब्दे प्रोक्ते चतुरचक्रवर्ती नृपो बाणं सविस्मयं प्रेक्षमाणस्तेन[2] प्रस्तावान्तरे देवताराधनोपायश्चेतस्यवतारयांचक्रे[3] । बाणस्तु सापत्रपस्तत उत्थाय नगरसीमनि स्तम्भमारोप्य खदिराङ्गारपूर्णमधःकुण्डं विधाय स्तम्भाग्रवर्तिनि सिक्कके[4] स्वयमधिरूढः *सूर्यस्तुतौ प्रतिकाव्यप्रान्ते सिक्कपदं छुरिकया छिन्दन् पञ्चभिः काव्यैस्तेन पञ्चसु पदेषु छिन्नेषु सिक्काग्रे विलग्नः षष्ठेन काव्येन प्रत्यक्षीकृतभानुस्तत्प्रसादात्सद्यःसंजातजात्यकाञ्चनकायः[5] । अन्यस्मिन्नहनि स सुवर्णचन्दनावलिप्ताङ्गः संवीतसितदिव्यवसनः समाजगाम । तद्वपुःपाटवं पश्यता नृपेण सूर्यवरप्रसादं मयूरे विज्ञपयति बाणो बाणनिभया गिरा तं मर्मणि विव्याध । यदि देवताराधनं[6] सुकरं तदा त्वमपि किमपीदृक् चित्रमाविःकुरु । इत्यभिहिते तेन मयूरेण तं प्रति प्रतिवचः संदधे । निरामयस्य किमायुर्वेदविदा तथापि तव वचः सत्यापयितुं निजपादौ च पाणी छुर्या विदार्य त्वया षष्ठे काव्ये सूर्यः परितोषितोऽहं तु पूर्वस्य काव्यस्य षष्ठेऽक्षरे भवानीं परितोषयामीति प्रतिश्रुत्य सुखासनमासीनश्चण्डिकाप्रासादपश्चाद्भागे निविष्टो मा भाङ्क्षीर्विभ्रममिति षष्ठेऽक्षरे‡ प्रत्यक्षीकृतचण्डिकाप्रसादात्प्रत्यग्रप्रथमानवपुःपल्लवः स्वसन्मुखं च तत्प्रासादमालोक्याभिमुखागतैर्नृपतिप्रमुखराजलोकैः कृतजयजयारवो महता महेन पुरं प्राविक्षत् ।

---

१ वरकोढी b बकोढी d २ ततः d ३ चिन्तयांचक्रे H c ४ शिक्यके d

* सूर्यशतकं मयूररचितं न बाणकृतं काव्यमालायां च प्रसिद्धम्

५ कायकान्तिः b L ६ आराधनायं a

‡ चण्डीशतकं तु बाणरचितं न मयूरकृतम् काव्यमालायां च प्रसिद्धम् तस्य प्रथमः श्लोकः इत्थं समग्रः B आदर्शे प्रदत्तः—

मा भांक्षीर्विभ्रमं भ्रूरधरविधुरता केयमास्यस्य रागं
पाणौ प्राण्येव नायं कलयसि कलहश्रद्धया किं त्रिशूलं ।
इत्युद्युत्कोपकेतून्प्रकृतिमवयवान्प्रापयन्त्येव देव्या
न्यस्तो वो मूर्ध्न्यमुष्या मरुदसुहृदसून्संहरन्नङ्घ्रिरंहः ॥

३० एतस्मिन्नवसरे मिथ्यादृशां शासने विजयिनि सम्यग्दर्शनद्वेषिभिः कैश्चित्प्रधानपुरुषैर्नृपोऽभिदधे । यदि जैनमते कश्चिदीदृक्प्रभावाविर्भावः प्रभवति तदा सिताम्बराः स्वदेशे स्थाप्यन्ते नो चेन्निर्वास्यन्ते इति तद्वचनानन्तरं श्रीमानतुङ्गाचार्यास्तत्राकार्य निजदेवतातिशयं कमपि दर्शयन्तु[2] इति राज्ञा भणितं[3] । ते प्राहुः—मुक्तानामस्मद्देवतानामत्र कोऽतिशयः संभवति तथापि तत्किंकराणां सुराणां प्रभावाविर्भावः कोऽपि विश्वचमत्कारकारी दर्श्यत इत्यभिधाय चतुश्चत्वारिंशता[4] निगडैर्निजमङ्गं नियमितं कारयित्वा तन्नगरवर्तिनः श्रीयुगादिदेवस्य प्रासादपाश्चात्यभागे स्थितो मन्त्रगर्भं *भक्तामरेति नवं स्तवं कुर्वन्प्रतिकाव्यं भग्नैकैकनिगडः शृङ्खलासंख्यैः काव्यैः पर्याप्तस्तवोऽभिमुखीकृतप्रासादः शासनं प्रभावयामास ॥ **इति श्रीमानतुङ्गाचार्यप्रबन्धः** ॥

३१ अथ कदापि राजा स्वदेशपण्डितानां पाण्डित्यं श्लाघमानो गूर्जरदेशमविदग्धतया निन्दन् स्थानपुरुषेणाभिदधे । अस्मद्देशीयबालगोपालस्यापि[5] भवदीयपण्डिताग्रणीः कोऽपि तुलां नारोहतीति । §ततः ज्ञापितवृत्तान्तः श्रीभीमः कदापि गोपवेषधारिणं पण्डितं पणस्त्रियं च तत्र

१ ततस्तौ स्पर्द्धया काश्मीरं गतौ इत्यधिकः पाठः d आदर्शे २ दर्शयत L d ३ अभिहिते L H ४ ततश्चत्वारिंशत् c d

* भक्तामरस्तोत्रं श्रीमानतुंगाचार्यरचितं प्रसिद्धमस्ति

५ देशीयबालगोपालयोः c H

§ B H आदर्शयोरत्रैवं पाठः—विज्ञप्ते नृपस्तं वृथा भाषिणं चिकीर्षुः आकारसंवृत्या कियन्तमपि कालं विलम्बमानः स्थानपुरुषेण तद्वृत्तान्तं ज्ञापितः श्रीभीमःस्वदेशसीमान्तनगरे विदग्धाः काश्चित्पणस्त्रियः कांश्चन गोपवेषधारिणः पण्डितांश्च मुक्तवान् । अन्यदा श्रीभोजदौवारिकेण, तत्रागत्य कश्चिद्द्विधो गोपः प्रतापदेवीनाम्नीं पणस्त्रियं स गृहीत्वा विदग्धलोकसुधासारां धारामारादवाप्य तां क्वापि सज्जनाकृते विमुच्य प्रत्यूषमुखे भूपाय गोपे निवेदिते श्रीभोजेन किमपि वदेत्यादिष्टः—

प्राहितवान् । तत्र प्रत्यूषे नृपसमीपे नीतो गोपालः श्रीभोजेन किमपि निवेदयेत्यादिष्टः

(८२) भोय[1] ए हु गलि[2] कण्ठुलउ भण केहउं पडिहाइ ।
उर लच्छिहि[3] मुह सरसति सीम निबद्धि काईं[4] ॥

T सरस्वतीकण्ठाभरणगोप इत्याह ततो राजा तदुक्तिविस्मितः T । सभायामलंकृतायां नेपथ्यधारिणीं पणस्त्रियं पुरो विलोक्य तां प्रति 'इह किं' इत्याकस्मिकं वचः श्रीभोजः समादिशत् । अथ स्वजातिपक्षपातादिव सरस्वत्याः प्रसादपात्रं शेमुषीनिधिः सा सुमुखी[5] शरीरिणी प्रतिभेव गम्भीरमपि तद्वचनतत्त्वमवगम्य[6], पृच्छन्तीति नृपं प्रति वचः[7] प्रथितवतीत्युचिततद्वचनैर्विकसितास्यैर्न[8] भोजेन लक्षत्रये दाप्यमानेऽज्ञाततत्त्वतया† त्रिरुक्तोऽपि कोशाधिपो यदा न ददाति तदा तं प्रकाशमाह । देशसात्म्यात्प्रकृतिकार्पण्याच्च लक्षत्रयमस्यै दाप्यते । औदार्यात्तु साम्राज्यमपि दीयमानमल्पतरमेव स्यादित्यादिष्टे समस्तसमाजलोकैः प्रेर्यमाणः स तयोर्वचनयोरन्वयं पृष्ट इत्यभिदधे । कर्णान्तविश्रान्तमपाङ्गाञ्जनरेखायुगं युगपदस्या निरूप्य मयेह किमित्यभिहितं । अनया तु द्विवचनस्य बहुवचनमिति प्राकृतलक्षणात्[9]पृच्छन्तीति कर्णाभ्यर्णेऽञ्जनरेषामिषात् । यो भवद्भ्यां श्रुतपूर्वः स एवायं श्रीभोज इति निर्णेतुं दृशौ गते[10] इत्युत्तरं प्रतिपादितं तदियं प्रत्यक्षरूपा भारती तदस्याः पारितोषिके लक्षत्रयं कियदिति ततो लक्षत्रयस्य त्रिर्व्याहारान्नवलक्षां[11]स्तस्यै दापयामास ॥

---

१ भोज एव हु कण्ठलउ a २ स्तंभल्लउ कंचुल a ३ लच्छिहिं c ४ कांइं c उरि लाच्छिहि मुहि c सीम विहली कोइ c

T T स्थाने इति तदुक्तिमाकर्ण्य विस्मयस्मेरमानसः H आदर्शे पाठः

५ सुमुखी शिरोमणी P ६ तद्वचोवगम्य B H c ७ वचसा D ८ विकसितवदनाम्भोजेन d

† तस्मिन्स्तब्धतां भजमाने B H आदर्शयोरधिकापंक्तिरत्र

९ प्राकृतसूत्रलक्षणात् A H वररुचिकृतप्राकृतप्रकाशे वर्तते चैतादृशं सूत्रम् । १० गत इत्याशङ्कयोत्तरं दत्तवती प्रज्ञावदातवाक्पतीनामपि पण्डितानां योर्थोऽविषयस्तं सहसैवोद्गिरन्ती B H ११ लक्षान्प्रत्यक्षान् H

३२ अथाबाल्यादेव स नृपः—

(८३) *मस्तकस्थायिनं मृत्युं यदि पश्येदयं जनः ।
आहारोऽपि न रोचेत किमुताकार्यकारिता ॥[1]

इति विज्ञाततत्त्वो धर्मेऽप्रमत्तोऽभूत् । कदाचिन्निद्राभङ्गानन्तरं कश्चिद्विपश्चित्समेत्य वेगवति तुरगेऽधिरूढस्त्वां प्रति प्रेतपतिरुपैतीत्यनुसारेण धर्मकर्मणि सज्जीभवितव्यमिति वचनाधिकारिणे पण्डिताय प्रत्यहमुचितदानं ददानः कदापि पराह्णे सभासिंहासने उपविष्टः । स्थगिकाबित्तसमर्पितबीटकात्प्रागेव मुखे पत्रं क्षिप्त्वाभ्यवहरन् व्यवहारवेदिभिस्तत्कारणं पृष्ट इत्यवदत्[2] । कृतान्तदन्तान्तरवर्तिनां मनुष्याणां यद्दत्तं यच्च भुक्तं तदेवात्मीयं परस्य तु संशयः । तथाच—

(८४) उत्थायोत्थाय बोधव्यं किमद्य सुकृतं कृतम् ।
आयुषः खण्डमादाय रविरस्तं प्रयास्यति ॥ १ ॥×

(८५) लोकः पृच्छति मे वार्तां शरीरे कुशलं तव ।
कुतः कुशलमस्माकमायुर्याति दिने दिने ॥ २ ॥

(८६) श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्[3] ।
मृत्युर्न हि परीक्षेत कृतं वास्य न वा कृतम् ॥ ३ ॥¶

(८७) मृतो मृत्युर्जरा जीर्णा विपन्नाः किं विपत्तयः ।
व्याधयो बाधिता[4]ः किं तु हृष्यन्ति[5] यदमी जनाः ॥ ४ ॥

इत्यनित्यताश्लोकचतुष्कप्रबन्धः ॥‡

---

* श्लोकः सुभाषितावल्यां ( ३२६७ ) वर्तते

१ अकृत्य c

२ पत्रं मुखबीटिकयाभ्यवहरन् व्यवहारवेदिभिर्विज्ञप्त इति श्लोकचतुष्टयं जगाद a H

× हितोपदेशे सुभाषितावल्यां ( ३२९० ) च वर्तते

३ पूर्वाह्णे चापराह्णिकम् c

¶ महाभारते शान्तिपर्वणि सुभाषितावल्यां ( ३२८१ ) च वर्तते

४ व्याधिताः c K ५ माद्यन्ति c

‡ अनित्यताश्लोकचतुष्कप्रबन्धः a H L C आदर्शान्मुक्त्वान्यत्र नोपलभ्यते

३३ अथान्यदा श्रीभोजः श्रीभीमभूपतेः पार्श्वाद्दूतमुखेन वस्तुचतुष्टयमयाचिष्ट । १ एकं वस्तु इहास्ति परत्र नास्ति २ द्वितीयं परत्रास्ति अत्र नास्ति ३ तृतीयमुभयत्रास्ति ४ चतुर्थमुभयत्रापि नास्ति इति विदुषां संदिग्धेऽर्थे पटहे वाद्यमाने गणिकावचनाद्वेश्यातपस्विदानेश्वरद्यूतकाररूपं वस्तुचतुष्टयं प्रहितं[1]मिति। **वस्तुचतुष्टयप्रबन्धः** ।।

३४ अन्यदा भोजनृपो वीरचर्यया परिभ्रमन्निशि कयाचिदपि दरिद्र[2]वध्वा ।

(८८) माणुसडा[3] दस दसे[4] दसा सुणियइं[5] लोयपसिद्ध ।
महं[6] कन्त ह इक्कज दसा अवरि नवोरहिं लिद्धं[7] ॥

इति पठ्यमानमाकर्ण्य तस्या दुस्थावस्थया संजातकृपो नृपः प्रातस्तत्पतिं सदस्यानीय तस्याः किमप्यायतिहितं विमृश्य बीजपूरकद्वये प्रत्येकलक्षमूल्यं रत्नं[8] तदुपकारायान्तर्विधाय तस्मै प्रसादीकृतवान् । तेनापि तं वृत्तान्तमजानता मूल्येन पत्रशाकापणे विक्रीतं तेनाप्युपायनाय तन्मातुलिङ्गद्वयं कस्यापि समर्पितं तेन श्रीभोजस्यैव समर्पितं[9] ॥

(८९) वेलामहल्लकल्लोलपल्लिद्दं[10] जइ वि गिरिनई पत्तं ।
अणुसरइ मग्गलग्गं पुणोवि रयणायरे रयणं ॥

*इत्यनुभवाद्भाग्यं नृपस्तथ्यमेव मेने यतः—

(९०) प्रीणिताशेषविश्वासु वर्षास्वपि पयोलवम् ।
नाप्नुयाच्चातको नूनमलभ्यं लभ्यते कुतः ॥*

इति बीजपूरकप्रबन्धः ॥

---

१ प्रहीयतां d २ दुर्विध d ३ माणसडी b ४ हवइ d ५ माणसडा दसइं देवेहि निम्मवियाइं c ६ मुज्झ C ७ नवोरिहिं हरियाइं ते वोरहिं C ८ लक्षमूल्यां रत्नद्वयीं प्रच्छन्नोपकाराय H L ९ उपढौकितम् d १० पल्लियं a पिल्लियं c d

* * तारकद्वयांतर्गतः पाठः a आदर्शे नोपलभ्यते

३८ अथान्यदा कस्यामपि निशि नृप एको न भव्य इति प्रच्छन्नं क्रीडाशुकं पाठयित्वा प्रातस्त्वया वाक्यमिदमुच्चारणीयमिति शिक्षितवान्। अथ तेन तथाभिधीयमाने नृपेण पृष्टाः पण्डिता निर्णयमजानन्तः षाण्मासीमवधिं[1] याचितवन्तः। ततस्तन्मुख्यो वररुचिस्तन्निर्णयाय देशान्तरं परिभ्रमन्केनापि पशुपालेनाहमेवामुं निर्णयं भवत्स्वामिने निवेदयिष्यामि। परममुं श्वानं वृद्धतया नोद्वोढुं वत्सलतया न मोक्तुं च शक्नोमीति तेनोक्ते तं श्वानं[2] निजस्कन्धे समारोप्य पशुपालं सह नीत्वा नृपसभामुपागतस्तमुत्तरकारिणं निवेदयामास। अथ स पशुपालो नृपेण तदेव वचनं पृष्टः। अस्मिन् जीवलोके राजन् लोभ एवैको न भव्यः। राज्ञा कथमिति भूयोऽपि पृष्टः। यद्ब्राह्मणः श्वानं स्कन्धदेशेनास्पृश्यमपि वहति तल्लोभस्यैव विजृम्भितमतो लोभ एव न भव्यः* **इति एको न भव्यः प्रबंधः॥**

३९ अथान्यदा मित्रमात्रसहायो नृपतिर्निशि परिभ्रमन्पिपासाकुलतया पणरमणीगृहं गत्वा मित्रमुखेन जलं याचितवान्। ततोऽतुच्छवात्सल्याच्छम्भल्या कालंविलम्बनेनेक्षुरसपूर्णः करकः सखेदमुपानीयत। मित्रेण खेदकारणे पृष्टे, एकस्यामिक्षुलतायां[3] पुरा रससंपूर्णः सवाहटिको घट आसीत् साम्प्रतं तु प्रजासु विरुद्धमानसे[4] नृपे चिरकालेन केवला वाहटिकैव भृतेति खेदकारणं। नृपस्तदाकर्ण्य केनापि वणिजा शिवा-

१ षण्मासीं यावत्याचितव्यवधानाः H L २ तज्जिघृक्षयावत्रान्तरितं श्वानं H L * अत्र H L आदर्शयोः निम्नलिखितमुपलभ्यते—यतः—

अहो लोभस्य साम्राज्यमेकच्छत्रमहीतले।
तावन्नीतिर्विनीतत्वमतिशीलं कुलीनता।
यावज्जगज्जयी लोभः क्षामं नाभ्येति जन्तुषु॥
( पद्यमिदं H आदर्शप्रान्ते लिखितं )

इत्युच्चरन्कथमपि भूयोऽनुयुक्तः श्वानं दधानं विप्रमपगतावरणं दर्शयन् लोभवशविसंस्थुलवृत्तिं ज्ञापयामास।

३ शूलेन भिद्यमानायां रसः परिपूर्णः सवाहटिको घट आसीत H c
४ विरुद्धमानसाय a P

यतने महति नाटके कार्यमाणे तद्गुण्टनचित्तमात्मानं विमृश्य तद्वच स्तथ्यमेवेति[1] ततो व्यावृत्य स्वस्थानमासाद्य निद्रां सिषेवे । अथ परेद्युः प्रजासु संजातकृपो नृपः पणाङ्गनागृहं गतः । तदा च तयाद्य प्रजासु वत्सलो नृपतिरिति प्रचुरेक्षुरससंकेतादिति व्याहरन्त्या राजा तोषितः ॥ इतीक्षुरसप्रबन्धः ॥

३७ अथ धारानगर्याः शाखानगरे प्रासादस्थितायाा गोत्रदेव्या नमश्चि-कीर्षया नित्यमागच्छन्[2] कदापि तद्भक्तिरञ्जितया देव्या स नृपः साक्षाद-भ्यधायि । परबलं सन्निहितमागतं ततः शीघ्रं व्रजेति विसृष्टः क्षणाद्गूर्जर-सैन्यैः स्वं वेष्टितमालोक्य जवाधिकेन वाजिना व्रजन् धारानगरगोपुरे प्रवि-शन्नाल्लयाकोल्लयाभिधानाभ्यां गूर्जराश्ववाराभ्यां तत्कण्ठे धनुषी प्रक्षिप्य, एतावता व्यापादितोऽसीति वदद्भ्यां त्यक्तः ॥

९१) असौ गुणी नमत्वेव भोजः कण्ठमुपेयुषा ।
धनुषा गुणिना यश्चापश्यद्श्वान्निपातितः ॥ १× ॥
इत्यश्ववारप्रबन्धः ॥

३८ अथान्यदा स एव राजा राजपाटिकायाः प्रत्यावृत्तः पुरगोपुरे सु[3]-

---

१ दध्यौ पुनः स वसुधाधवः सौधमध्यास्य निद्रावसरे संजातकृपः प्रजासु । परस्मिन्नहनि पणाङ्गनागृहमुपगतस्तत्कालागतया तयाद्य प्रजासु वत्सलो नृपतिरिति C H
२ कदाचिद्वेलाव्यतिक्रमे जाते सति प्रत्यक्षीभूतया देवतया मितपरिच्छदं द्वारप्रदेशमा-गतमकस्मान्नृपमालोक्य ससंभ्रमान्निषेदुषी निजासनमतिचक्राम । नृपः प्रणामपूर्वकं तं वृत्तान्तं पृच्छन् सन्निहितं परबलमागतं विचिन्त्य शीघ्रं व्रजेति विसृष्टो देवतया क्षणात् गूर्जरसैन्यैर्वेष्टितं स्वमपश्यत् B C d H

+ कीर्तिकौमुद्यामेवं पाठः श्लोकस्यास्य:—
असौ गुणीति मत्वेव भोजः कण्ठमुपेयुषा ।
धनुषा गुणिना यस्य नश्यन्नश्वान्न पातितः ॥
पद्यमिदं B L H आदर्शेषु नोपलभ्यते

३ सुमुख P मुख L

स्वमुक्तेन तुरगेण प्रविशन् व्याकुलीकृतेषु लोकेषु, इतस्ततः पलायमानेषु[1] जनेषु कामपि तक्रविक्रयिणीं जनसंमर्देन मौलिकंपाङ्कूतलपतितभग्नभाण्डामपि गोरसे सरित्प्रवाह इव प्रसरति विकसितमुखां तां प्राह[2] । तवाविषादे किं कारणमिति नृपेण पृष्टे सा प्राह—

९२) हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं
देशान्तरे विधिवशाद्गणिकास्मि जाता ।
पुत्रं भुजङ्गमधिगम्य चितां प्रविष्टा
शोचामि गोपगृहिणी कथमद्य तक्रम् ॥

तस्मात्प्रदेशान्महीनदी[3] प्रादुरासेत्यवादिषुः ॥

॥ इति गोपगृहिणीप्रबन्धः ॥

३९ अन्यदा प्रीतो भोज उपशिलामेकां लक्षीकृत्य धनुर्वेदमनिर्वेदमभ्यसंस्तत्कालदर्शनार्थमागतेन सिताम्बरवेषधारिणा श्रीचन्दनाचार्येण प्रत्युत्पन्नप्रतिभाभिरामतयौचित्यमभिदधे—

९३) विद्धा विद्धा शिलेयं भवतु परमतः कार्मुकक्रीडितेन
राजन्पाषाणवेधव्यसनरसिकतां मुञ्च देव प्रसीद ।
क्रीडेयं चेत्प्रवृद्धा कुलशिखरिकुलं केलिलक्षं करोषि
ध्वस्ताधारा धरित्री नृपतिलक तदा याति पातालमूलम् ॥

इति तत्कवितातिशयचमत्कृतोऽपि किञ्चिद्विचिन्त्य नृपतिरित्युवाच । भवता सर्वशास्त्रपारङ्गतेनापि ध्वस्ता धारेति यत्पदमपाठि ततः कमप्युत्पातं सूचयति* ॥

४० इतश्च डाहालदेशीयराज्ञो राज्ञी देमतीनाम्नी महायोगिनी कदाचिदासन्नप्रसवा सदैव दैवज्ञानिति पप्रच्छ । कस्मिन्सुलग्ने जातः सुतः सार्व-

१ पलायमानेषु लोकेषु C जातभयेषु लोकेषु H L २ तां श्रीभोजः प्राह तव विषादेऽपि किं हर्षकारणं नृपेणेत्यभिहिता सा प्राह L ३ महीयसी नदी प्रादुरासीत L H इति लोका वदन्ति D

* प्रबन्धोऽयं B L आदर्शयोर्नोपलभ्यते

भौमो भवतीति । अथ तैः सम्यगवगम्योच्चराशिषु केन्द्रस्थेषु सौम्यग्रहेषु त्रिषडायगेषु क्रूरेषु चामुकलग्ने जातः सुतः सार्वभौमो भवतीत्युक्तं तन्नि-शम्यै निश्चितप्रसवदिनादूर्ध्वं षोडशप्रहरान्यावद्योगयुक्त्या गर्भस्तम्भं कृत्वा नैमित्तिकनिर्णीते लग्ने सुतं कर्णनामानं प्रासूतं । तद्गर्भधारणदोषादष्टमे यामे सा विपन्नाँ ।

सुलग्नजातत्वात्पराक्रमाक्रान्तदिग्चक्रः षट्त्रिंशदधिकेन राज्ञां शतेन सेव्यमानश्चतुर्दशसु राजविद्यासु परं प्राविण्यमावहन् विद्यापतिप्रमुखैर्म-हाकविभिः स्तूयमानः । तद्यथा—

९४) *मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो
नितम्बे पत्रालीं सतिलकमभूत्पाणियुगलम् ।
अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशा—
दपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥ १ ॥

९५) गोपीपीनपयोधराहतमुरः सन्त्यज्य लक्ष्मीपतेः
शङ्के पङ्कजशङ्कया नयनयोर्विश्राम्यति श्रीस्तव ।
श्रीमत्कर्णनरेन्द्र यत्र चलति भ्रूवल्लरीपल्लव—
स्तत्र त्रुट्यति भीतिभङ्गुरतया दारिद्र्यमुद्रा यतः ॥ २ ॥

इति स्तूयमानः स कर्णनृपः कदाचिद्दूतमुखेन श्रीभोजमुवाचं । भव-न्नगर्यां भवत्कारिताश्चतुरुत्तरं शतं प्रासादाः । एतावन्त एव गीतप्रबन्धा भवदीयाः । एतावन्ति तव बिरुदानि । अतश्चतुरङ्गयुद्धेन द्वन्द्वयुद्धेन वा चतुर्दशसु विद्यासु वादशक्त्याँ त्यागशक्त्या वा मां निर्जित्य पञ्चोत्तरशतबिरुदानां

१ इति निशम्य D २ सुतमसूत H ३ संयमिनीं पुरीं जगाम D H ४ कुन्त-लकलापेन C भृंगविभ्रमकारिणा कुन्तलकलापेन सेव्यमानविमलक्रमकमलयुगलः B H

* पद्यमिदं शार्ङ्गधर पद्धत्यां ( १२६२ ) कस्यापीति प्रदत्तम्

५ पत्रालिः d ६ स्तूयमाननानावदातः श्रीभोजं प्रधानानि प्राहिणोत B L H ( अतोऽग्रिमवृत्तान्तः B आदर्शे नास्ति ) ७ वादिनत a P वादस्थलेन त्या-गेन च H L

भाजनं भूयाः । नो वाहं त्वां विजित्य सप्तत्रिंशताधिकस्य राज्ञां शतस्य नाथो भवामीति तद्वचसा [1]परिम्लानमुखाम्भोजः श्रीभोजः सर्वेष्वपि प्रकारेषु जितकाशिनं श्रीकाशिपुराधीशं विमृशन् स्वं विजितं मन्यमानस्तानुपरोधपूर्वमभ्यर्थ्यैवमङ्गीकारयामास । मयावन्त्यां श्रीकर्णेन वाराणस्यामेकस्मिन्नहनि लग्ने गर्तापूरपूर्वमारभ्याहंपूर्विकया कार्यमाणयोः पञ्चाशद्धस्तप्रमाणयोः प्रासादयोः यस्मिन्प्रासादे प्रथमं कलशध्वजारोपो भवति तस्मिन्नुत्सवे परेण नरेन्द्रेण त्यक्तच्छत्रचामरेण करेणुमधिरूह्य समागन्तव्यमित्थं भोजस्य यथारुच्यङ्गीकारे कर्णगोचरंगते श्रीकर्ण[2]स्तेनापि प्रकारेण भोजमधश्चिकीर्षुरेकस्मिन्नेव लग्ने पृथग् पृथग् प्रारब्धयोरुभयोः प्रासादयोः सर्वाभिसारेण निजप्रासादं निर्मापय[3]यंस्तत्र कर्णः सूत्रभृतं पप्रच्छ । एकस्मिन्नहन्युदयास्तयोरन्तरे कियान्कर्मो[4]च्छ्रायो भवतीति निवेद्यतां । अथ तेन चतुर्दश्यनध्याये तत्र सप्तहस्तप्रमाणा एकादश प्रासादा दिनोदये प्रारभ्य दिनान्ते कलशारोपपर्यन्ताः कारयित्वा नृपाय दर्शितास्तया समग्रसामग्र्या नृपः प्रमुदितचित्तो[5] भोजप्रासादकलापबन्धे संजायमाने निजप्रासादेऽनलसः कलशमधिरोप्य निर्णीते ध्वजाधिरोपलग्ने तया प्रतिज्ञया श्रीभोजं दूतमुखेन निमन्त्रयामास । ततः स्वप्रतिज्ञाभङ्गभीरुर्मालवमण्डलप्रभुस्तथा प्रयातुमप्रभुश्[6] श्रीभोजस्तूष्णीमासीत्

४१ अथ प्रासादध्वजाधिरोपानन्तरं श्रीकर्ण[7]स्तावद्भिरेव नृपैः[9] समं प्रस्थितः श्रीभोजमभिषेणयितुं[8] । तदा च श्रीभोजराज्यार्धं प्रतिश्रुत्य श्रीमालवकमण्डलपार्ष्णिघाताय श्रीकर्णः श्रीभीममाजूहवत् । अथ ताभ्यां नरेन्द्राभ्यां मन्त्रेणाक्रान्तो व्याल इव भोजभूपालो विगलितदर्पविषो बभूव ।

---

१ इति प्रभावाविर्भावादीषत्परि H D २ श्रीकर्णस्तेषु सामर्षोऽपि H L ३ निर्मापयतोस्तत्र P ४ कर्मस्थायो c a H ५ चित्तो भोजप्रासादे कपालबन्धे जायमाने H c ६ अप्रभूष्णुश्च L H a ७ भवतीर्णपुराणकर्ण इव H ८ श्रीभोजमभ्यषेणयत्, तस्मिन्नवसरे H L c ९ निःसीमतदीयसीमनगरे L H

तदा चाकस्मिके संजाते भोजवपुरपाटवेऽपह्नुयमाने[1], सर्वेष्वपि घाटमार्गेषु निजानियुक्तमानुषैः सर्वथा निषिध्यमाने परपुरुषप्रवेशे, श्रीभीमः कर्णाभ्यर्णवर्तिनं निजसान्धिविग्रहिकं डामरं भोजवृत्तान्तज्ञानाय स्वपुरुषेण पप्रच्छ तेनापि स पुरुषो गाथामध्याप्य प्रहितः श्रीभीमसभामुपागतः ॥

९६) अम्बयफलं सुपक्कं बिण्टं सिढिलं समुब्भडो पवणो ।
साहा मिल्हणसीला[2] न याणिमो कज्जपरिणामो[3] ॥

अनया गाथया श्रीभीमे तथास्थिते श्रीभोजः सन्निहितपरलोकपथप्रयाणः कृततदुचितधर्मकृत्यो[4] मम पञ्चत्वानन्तरं मत्करौ विमानाद्बहिर्विधेयावित्यादिश्य दिवं[5] गतः ॥

९७) कमु करुरे पुत्र कलत्र धी कमु करुरे करसणवाडी ।
एकला आइवो एकला जाइवो हाथपग बे झाडी ॥

४२ इति भोजवाक्यं वेश्यया कथितं लोकानां प्रति। तद्वृत्तान्तविदा कर्णेन दुर्गभङ्गपूर्वं समग्रायां भोजलक्ष्म्यामुपात्तायां श्रीभीमेन डामर आदिष्टो यच्छ्रीकर्णात्त्वया मत्परिकल्पितं[6] राज्यार्धं निजं शिरो वोपनेतव्यमिति राजादेशं विधित्सुर्द्वात्रिंशता पत्तिभिः सह गुरूदरे प्रविश्य मध्याह्नकाले प्रसुप्तं श्रीकर्णं बान्द्यं[7] जग्राह । अथ तेन राज्ञा एकस्मिन् विभागे नीलकण्ठचिन्तामणिगणाधिपप्रमुखेदेवतावसरे निर्णीते परस्मिन्नुत्तरार्धे समस्तराज्यवस्तूनि स्वेच्छयैकमर्धमादत्स्वेत्यभिहिते षोडशप्रहरांस्तथा स्थित्वा पुनः श्रीभीमराजादेशाद्देवतावसरमादाय श्रीभीमायोपायनीचकार ॥ अथैतत्प्रबन्धसंग्रहकाव्ययुग्मं यथा—

९८) पञ्चाशद्धस्तमाने सुरभवनयुगे तुल्यलग्नक्षणे प्राक्
प्रारब्धे यस्य शीघ्रं भवति हि कलशारोपणं तत्र राज्ञा ।

१ अपह्नियमाणेषु P २ उद्धतसाहा मल्हणसीला b c ३ परिणामे b c ४ कृत्यो राज्यस्यानुशास्तिं समस्तराजलोकस्य वितीर्य c L ५ दिवमुपेयिवान् c L ६ मत्परिकल्पितं निजं P ७ बन्द्यै K छान्द्यं P ८ शिव d

अन्येन च्छत्रबालव्यजनविरहितेनाभ्युपेतव्यमेवं
संवादे भोजराजो व्ययविमुखमतिः कर्णदेवेन जिग्ये ॥ १ ॥

९९) भोजे राज्ञि दिवं गतेऽतिबलिना कर्णेन धारापुरी–
भङ्गं सूत्रयतोपरुध्य नृपतिर्भीमः सहायीकृतः ।
तद्भृत्येन च डामरेण जगृहे बन्दीकृतात्कर्णतो
हैमी मण्डपिका गणाधिपयुतः श्रीनीलकण्ठेश्वरः ॥ २ ॥

१००)*कविषु वादिषु भोगिषु योगिषु
द्रविणदेषु सतामुपकारिषु ।
धनिषु धन्विषु धर्मपरेषु च
क्षितितले न हि भोजसमो नृपः ॥ ३ ॥

---

( a आदर्शे तथा मु. पुस्तके निम्नलिखितः प्रबन्धोऽधिको वर्तते )

अथ श्रीकर्णस्याग्रे इदं काव्यमुक्तं कर्पूरकविना मुखे हारावाप्तिरित्यादि ( श्लो. ९३ ) । अपशब्दकथनाद्राज्ञा तस्य कवेः किंचिन्न प्रदत्तं ।

कुक्षेः कोटर एव कैटभरिपुर्धत्ते त्रिलोकीमिमा–
मन्तर्भूरिभरं बिभर्ति तमपि प्रीतो भुजङ्गाधिपः ।
श्रीकण्ठस्य स कण्ठसूत्रमभवद्देव त्वया तं हृदा
बिभ्राणेन परेषु विक्रमकथा श्रीकर्ण निर्नाशिता ॥ १ ॥

श्रीनाचिराजकविनोक्तमेतद्राज्ञा प्रदत्तम् ।

दत्ता कोटी सुवर्णस्य मत्ताश्च दश दन्तिनः ।
दत्तं श्रीकर्णदेवेन नाचिराजकवेर्मदात् ॥ २ ॥

भार्यया हक्कितेन कर्पूरकविना समागच्छतो नाचिराजकवेरग्रे मार्गे इदं काव्यं भणितं । यत्—

कन्ये कासि, न वेत्सि मामपि कवे कर्पूर, किं भारती
सत्यं, किं विधुरासि, वत्समुषिता, केनाम्ब दुर्वेधसा ।
किं नीतं तव, मुञ्जभोजनयनद्वन्द्वं, कथं वर्तसे
दीर्घायुर्भजतेऽन्वयष्टिपदवीं श्रीनाचिराजः कविः ॥

श्रीनाचिराजकविना संतुष्टेन यद्राज्ञा प्रदत्तं तत्सर्वमपि कर्पूरकवये प्रदत्तं ।

* पद्यमिदं भोजप्रबन्धेऽप्यस्ति

१०१ धाराधीशधरामहीशगणने०—

( अयं श्लोकः पूर्वं ( ७० ) संपूर्णः प्रदत्तः )

*इत्यादि भोजस्य नानाविधाः प्रबन्धा अवशेषा यथाश्रुतं मन्तव्याः ॥

---

* c d b पुस्तकेषु प्रान्तभागे लिखितानि मुद्रितपुस्तके च टिप्पण्यां प्रदत्तानि काव्यानि यथा ( सर्वाण्येतानि श्रीबल्लालविरचितभोजप्रबन्धे सन्ति )—

धाराधरस्त्वदसिरेव नरेन्द्र चित्रं
वर्षन्ति वैरिवनिताजनलोचनानि ।
कोशेन सन्ततमसंगतिराहवेऽस्य
दारिद्यमभ्युदयति प्रतिपार्थिवानाम् ॥ १ ॥

कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्ता--
मादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः ।
दिङ्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः
सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ २ ॥

अये लाजा उच्चैः पथि वचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यास्मात्सुपिहितवती दीनवदना ।
मयि क्षीणोपाये यदकृत दृशावश्रुबहुले
तदन्तः शल्यं मे त्वमसि पुनरुद्धर्तुमुचितः ॥ ३ ॥

आमोदैर्मरुतो मृगाः किसलयोल्लासैस्त्वचा तापसाः
पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दिताश्छायया ।
स्कन्धैर्गन्धगजास्त्वयैव विहिताः सर्वे कृतार्थास्ततः
त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नापदोऽन्ये द्रुमाः ॥ ४ ॥

हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्द्धालुश्चेदहह कविना वश्यवचसा ।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ ५ ॥

मुक्ताभूषणमिन्दुबिम्बमजनि, व्याकीर्णतारं नभः
स्मारं चापमपेतचापलमभूदिन्दीवरे मुद्रिते ।
व्यालीनं कलकण्ठमन्दरणितं मन्दानिलैः स्पन्दितं
निष्पन्दस्तबका च चम्पकलता साभून्न जाने ततः ॥ ६ ॥

१०२) देव त्वत्करनीरदे दशदिशि प्रारब्धपुण्योन्नतौ
चञ्चत्काञ्चनकङ्कणद्युतितडित्स्वर्णामृतं वर्षति ।
वृद्धा कीर्त्तितरङ्गिणी समभवत्प्रीता गुणग्रामभूः
पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ १ ॥

---

खिन्नं मण्डलमैन्दवं, विलुलितस्रग्भारनद्धं तमः
प्रागेव प्रथमानकैतकशिखालीलायितं सुस्मितम् ।
शान्तं कुण्डलताण्डवं, कुवलयद्वन्द्वं तिरोमीलितं
वीतं विद्रुमसीत्कृतं, नहि ततो जाने किमासीदिति ॥ ७ ॥
अहो मे सौभाग्यं मम च भवभूतेश्च भणितिं
तुलायामारोप्य प्रतिफलति तस्यां लघिमनि ।
गिरां देवी सद्यः श्रुतिकलितकल्हारकलिका
मधूलीमाधुर्यं क्षिपति परिपूर्त्यै भगवती ॥ ८ ॥
लक्ष्मीक्रीडातडागो रतिधवलगृहं दर्पणो दिग्वधूनां
पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम् ।
पिण्डीभूतं हरस्य स्मितममरधुनीपुण्डरीकं मृगाङ्को
ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोधनस्य ॥ ९ ॥
महाराज श्रीमन् जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं कविवरमभौमं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना ॥ १० ॥
नीरक्षीरे गृहीत्वा निखिलखगततीर्याति नालीकजन्मा
तक्रं धृत्वा तु सर्वानटति जलनिधींश्चक्रपाणिर्मुकुन्दः ।
सर्वानुत्तुङ्गशैलान् दहति पशुपतिर्भालनेत्रेण पश्यन्
व्याप्तत्वत्कीर्त्तिकान्तौ त्रिजगति नृपते भोजराज क्षितीन्द्र ॥ ११ ॥
विद्वद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः
कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान् पूर्तये ।
उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥ १२ ॥
स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनो—
र्वत्सस्यानेतुकामस्तृणचयमधुना मुग्ध दुग्धं न तस्याः ।

१०३) श्रीभोजे मृगयां गतेऽपि सहसा चापे समारोपिते-
ऽप्याकर्णान्तगतेऽपि मुष्टिगलितेऽप्येणांगलग्नेऽपि च ।
न त्रस्तं न पलायितं न चलितं नोत्कंपितं नोत्प्लुतं
मृग्या मद्वशिनं करोति दयितं कामोऽयमित्याशया ॥ २ ॥

---

श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा
व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमूर्व्याम् ॥ १३ ॥
अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् !
शत्रूणां शृंखलैर्लोहं ताम्रं शासनपत्रकैः ॥ १४ ॥
निजानपि गजान् भोजं ददानं प्रेक्ष्य पार्वती ।
गजेन्द्रवदनं पुत्रं रक्षत्यद्य पुनः पुनः ॥ १५ ॥
घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं
वने वासः कन्दादिकमशनमेवंविधगुणः ।
अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ १६ ॥
रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः० ॥ १७ ॥
विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्याजौ रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः० ॥ १८ ॥
धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धिः० ॥ १९ ॥
अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृते
देवेत्थं जगतीतले पुरहराभावे समुन्मीलति ।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २० ॥

१०४) त्यागैः कल्पद्रुम इव भुवि त्रासिताशेषदौस्थ्यः
साक्षाद्वाचस्पतिरिव जनान्दब्धनानाप्रबन्धः ।
राधावेधेऽर्जुन इव चिरात्तस्य कीर्त्त्योत्कचित्तै–
राहूतो द्रागमरनिकरैः स्वर्ययौ भोजराजः ॥ ३ ॥

**इति श्रीमेरुतुङ्गाचार्यविरचिते प्रबन्धचिन्तामणौ श्रीभोजभीम-भूपयोर्नानावदातवर्णनो नाम द्वितीयः प्रकाशः ॥**

---

शुक्तिद्वयपुटे भोज यशोऽब्धौ तव रोदसी ।
मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ २१ ॥

अमूत्प्राची पिङ्गा रसपतिरिव प्राप्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणात्क्षीणास्तारा नृपतय इवानुद्यमपरा
न राजन्ते दीपा द्रविणरहितानामिव गृहाः ॥ २२ ॥

समुन्नतघनस्तनस्तबकचुम्बितुम्बीफल—
क्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुर—
तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ २३ ॥

बल्लालक्षोणीपाल त्वदहितनगरे संचरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी ।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुपातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्ति ॥ २४ ॥

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु—
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याधुना ।
इत्यन्तःपुरसुन्दरीजनगणे न्यायाधिकं ध्यायता
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थिता नाडिकाः ॥ २५ ॥

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्यते ।
तमपि कुरुते क्रोडाधीनं पयोनिधिरादरा—
दहह महतां निःसीमानश्चरित्रविभूतयः ॥ २६ ॥

दृष्टे श्रीभोजराजेन्द्रे गलन्ति त्रीणि तत्क्षणात् ।
शत्रोः शस्त्रं कवेः काव्यं नीवीबन्धो मृगीदृशाम् ॥ २७ ॥

श्रीः

# प्रबन्धचिन्तामणिः

## तृतीयः प्रकाशः

### सिद्धराजप्रबन्धः

१ अथ कदाचिद्गूर्जरदेशे अवग्रहनिगृहीतायां वृष्टौ राजदेयविभागनिर्वाहाक्षमो देशलोकः तन्नियुक्तैर्व्यापारिभिः[1] श्रीपत्तने समानीय भीमभूपाय न्यवेद्यत । ततः कदाचिदहर्मुखे श्रीमूलराजकुमारस्तत्र चङ्क्रममाणो नृपपत्तिभिः सस्यनिदानीभूतदानीसंबन्धे व्याकुलीक्रियमाणं सकललोकमालोक्य पारिपार्श्विकेभ्योऽधिगतवृत्तान्तः कृपया किञ्चिदश्रुमिश्रलोचनो वाहवाल्यां[2] तदतुल्यया[3] कलया नृपं परितोष्य वरं वृणीष्वेति नृपादेशमासाद्य भाण्डागार एव वरोऽयमस्तु इति विज्ञपयामास । राज्ञा किमिति न याचसे इत्युक्तः प्राप्तिप्रमाणाभावादित्युदीरयॅन्[4] भृशं निर्बन्धपराद्धराधिपात्तेषां कुटुम्बिकानां दानीमोचनवरं ययाचे । ततो हर्षबाष्पाविललोचनेन राज्ञा तत्तथेति प्रतिपद्य भूयोऽप्यर्थयेत्यभिहितः ।

१) क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुःपूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये[5] ॥

इति काव्यार्थबलेन निगृहीतप्रभूतलोभस्ततो भूयः किमप्यभ्यर्थ्यमानोऽपि मानोन्नततया स्वस्थानमगमत् । तैश्च कौटुम्बिकलोकैः स्तूयमान-

---

१ निगृहीतवर्षेण विशोपकदण्डाहिदेशग्रामकौटुम्बिकेषु राजदेयविभागनिर्वाहाक्षमेषु तन्नियुक्तैर्व्यापारिभिः सकलोऽपि स ज्ञातवित्तो देशलोकः L H C आदर्शेष्वेवं पाठः २ वाहाल्यां a ३ अतुलया L ४ इत्युदीर्य H L ५ विक्रमचरिते, शार्ङ्गधरपद्धत्यां (७७३) सुभाषितावल्यां (२८५) च पद्यमिदं दृश्यते ६ सूक्तार्थं H d

स्तृतीयेऽहनि स श्रीमूलराजः[1] स्वर्लोकं जगाम। तच्छोकाम्बुधौ स राजलोको राजा स च पूर्वमोचितलोकश्च निमग्नश्चिरेणं चतुरैर्विविधबोधबलादपकृष्टशोकशङ्कुश्चक्रे।

२ अथ द्वितीयवर्षे कर्षुकलोकैर्वर्षाबलान्निष्पन्नेषु समस्तसस्येषु व्यतीततद्वर्षयो राजदेय[2]विभागे प्रदिश्य[3]माने राज्ञि चानाददाने सति तैरुत्तरसभा मेलिता। तत्र सभ्यानां लक्षणमेवं—

२) *न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मः स नो यत्र न चास्ति सत्यं
सत्यं न तद्यत्कृतकानुविद्धम्॥

इति निर्णयात्सभ्यैर्गतवर्षतद्वर्षयोर्दानीं राजा ग्राहितः। ततस्तेन द्रव्येण कोशैद्रव्येण च श्रीमूलराजकुमारश्रेयसे नव्यस्त्रिपुरुषप्रासादः श्रीभीमेन कारितः।

३ अनेन श्रीपत्तने श्रीभीमेश्वरदेवभट्टारिकाभीरुआणीप्रासादौ कारितौ सं० १०७८[5] पूर्वं वर्ष ४२ श्रीभीमेन राज्यमकारि। श्रीउदयमतिनाम्न्या तद्राज्ञ्या श्रीपत्तने सहस्रलिङ्गसरोवरादप्यतिशायिनी नव्या वापी कारिता। अथ सं. ११२०[6] वर्षे श्रीकर्णस्य[7] महाशृंगारिणः राज्याभिषेकः संजातः॥

---

१ प्रार्थयमानो मानोन्नततया स्वसौधमध्यास्य बन्धमोचितैस्तैर्लोकैः सदैव भावादुपास्यमानः स्वसौधगतैश्च स्तूयमानस्तृतीयेऽहनि तदीयसन्तोषदशा श्रीमूलराजः B H L २ राजदेयभागविभागे a P L ३ प्रविश्यमाने a H K L

* महाभारते, हितोपदेशे, शार्ङ्गधरपद्धत्यां ( १३४४ ) च दृश्यते पद्यमिदम्

४ दानीं नृपतेः पार्श्वाद्ग्राहयित्वा आपूर्यमाणकोश d H ५ अथ सं. १०७८ पूर्वं श्रीभीमेन वर्ष ५२ H सं. १०७७ प्रारभ्य वर्ष ४२ मास १० दिन ९ राज्यं कृतं a P ६ सं. ११२८ वर्षे H सं. ११२० चैत्र वदि ७ सोमे हस्तनक्षत्रे मीनलग्ने a P ७ श्रीकर्णदेवस्य a P

४ इतश्च शुभकेशिनामा कर्णाटराट् तुरगापहृतोऽटव्यां नीतः कुत्रापि पत्रलवृक्षच्छायां सेवमानः प्रत्यासन्नदावपावके कृतज्ञतया विश्रामोपकारकारिणं तमेव तरुमजिहासुस्तेनैव सह तस्मिन्दहने प्राणानाहुतीचकार । ततस्तत्सूनुर्जयकेशिनामा तद्राज्ये साचिवैरभिषिक्तः क्रमेण तत्सुता मयणल्लदेवी समजनि सा च शिवभक्तैः सोमेश्वरनामनि गृहीतमात्र एवेति पूर्वभवमस्मार्षीत् । यदहं प्राग्भवे ब्राह्मणी द्वादशमासोपवासान्कृत्वा प्रत्येकं द्वादशवस्तूनि तदुद्यापने दत्वा श्रीसोमेश्वरनमस्याकृते प्रस्थिता बाहुलोडनगरमागता[1] तत्करं दातुमक्षमाग्रतो गन्तुमलभमाना तन्निर्वेदादहमागामिनि जन्मनि अस्य करस्य मोचयित्री भूयासमिति कृतनिदाना कृतानशना च विपद्यात्र कुले जातेति पूर्वभवस्मृतिः । अथ बाहुलोडकरमोचनाय सा गूर्जरेश्वरं प्रवरं वरं कामयमाना तं वृत्तान्तं पित्रे[3] निवेदयामास । अथ जयकेशिराज्ञा तं व्यतिकरं ज्ञापितः श्रीकर्णः स्वप्रधानैः स्वसुताया मयणल्लदेव्या अङ्गीकारं याच्यते स्म । अथ श्रीकर्णे तस्याः कुरूपताश्रवणादुदासीने[4] सति तस्मिन्नेव राज्ञि निर्बन्धपरां तां मयणल्लदेवीं पिता स्वयंवरां प्राहिणोत् । अथ श्रीकर्णनृपो गुप्तवृत्त्या स्वयमेव तां कुत्सितरूपां निरूप्य[5] सर्वथा निरादर एव जातः । ततो[6]ऽष्टभिः सहचरीभिः सह नृपतिहत्याकृते मयणल्लदेवीं प्राणान्परिजिहीर्षुं मत्वा श्रीकर्णजनन्या उदयमतिराज्ञ्या तासां विपदं द्रष्टुमक्षमया ताभिः सह प्राणसंकल्पश्चक्रे ॥ यतः—

३) ×स्वापदि तथा महान्तो न यान्ति खेदं यथा परापत्सु ।
अचला निजोपहतिषु प्रकम्पते भूः परव्यसने ॥

---

* अयं प्रबन्धः जिनमण्डनगणीयकुमारपालप्रबन्धे वर्तते

१ प्रान्तरप्रान्तभूमौ H L २ मुपागता H ३ मातरं निवेदितवती B H L ४ श्रीकर्णः प्रधानपुरुषैर्मयणल्लदेव्याः कुरूपतां निशम्य मन्दादरे b H ५ विलोक्य H D ६ दिक्कन्याभिरिव मूर्तिमतीभिः H B L

× अयं श्लोकः जिनमण्डनगणीयकुमारपालप्रबन्धेऽपि वर्तते ।

इति महोपप्लवमुपस्थितमवगम्य मातृभक्त्या तां परिणीय श्रीकर्णः पश्चाद्दृष्टिमात्रेणापि न संभावयामास ॥

५ *अन्यदा कस्यामप्यधमयोषिति साभिलाषं नृपं मुञ्जालमन्त्री कञ्चुकिना विज्ञाय तद्वेषधारिणीं कृत्वा मयणल्लदेवीमृतुस्नातां रहसि प्राहिणोत्। तामेव स्त्रियं जानता नृपतिना सप्रेमभुज्यमानायास्तस्या आधानं समजनि तदा च तया संकेतज्ञापनाय नृपकरान्नामाङ्कितमङ्गुलीयकं निजाङ्गुल्यां न्यधायि। अथ प्रातस्तद्दुर्विलसितात्प्राणपरित्यागोद्यतो नृपतिः स्मार्तांस्तत्प्रायश्चित्तं पप्रच्छ। तैस्तप्तताम्रमयपुत्तलिकालिङ्गनमिति[2] निवेदिते प्रायश्चि[3]त्तं तथैव चिकीर्षवे स मन्त्री यथावदवदत् ॥

६ ×सुलग्ने तस्य जातस्य सूनो र्नृपतिर्जयसिंह इति नाम निर्ममे। स बालस्त्रिवार्षिकः कुमारैः सवयोभिः सह रममाणः सिंहासनमलञ्चक्रे। नैमित्तिकैस्तस्मिन्नेवाभ्युदयिके[4] लग्ने निवेदिते राजा तदैव तस्य सूनो राज्याभिषेकं चकार ॥ सं० ११५० वर्षे पौषवद २ शनौ श्रवणनक्षत्रे वृषलग्ने श्रीसिद्धराजस्य पट्टाभिषेकः।

७ स्वयं तु, आशापल्लीनिवासिनमाशाभिधानं भिल्लमभिषेणयन् भैरवदेव्याः शकुने जाते तत्र कोछरबाभिधानदेव्याः प्रासादं च कारयित्वा षट्लक्षाधिपं भिल्लं विजित्य तत्र जयन्तीं देवीं प्रासादे स्थापयित्वा तथा कर्णेश्वरदेवतायतनं कर्णसागरतडागालङ्कृतं चकार। कर्णावतीपुरं निवेश्य स्वयं तत्र राज्यं चक्रे।

---

१ इति न्यायात्तदाग्रहादेवानिच्छुनापि सर्वथा श्रीकर्णेन सा परिणिन्ये। तदनन्तरं (दृग्मात्रेण) सर्वथा तामसंभावयन् कस्यां C B H

* अयं प्रबन्धः जिनमण्डनगणीयकुमारपालप्रबन्धे तथा चारित्रसुन्दरगणीयकुमारपालचरितेऽपि वर्तते।

२ उद्यताय नृपतये स्मार्तैस्तप्तताम्रमयपुत्तलिकालिङ्गनमिति प्रायश्चित्ते c B H
३ प्रायश्चित्ताय a L P

× ६, ७ प्रबन्धौ जि. कु. प्रबन्धे चा. कु. चरितेऽपि

४ तद्व्यवहारविरुद्धं विमृशता नृपेण पृष्टैर्नैमित्तिकैस्तस्मिन्नेवाभ्युदयिके B H D

८ श्रीपत्तने तेन राज्ञा श्रीकर्णमेरुप्रासादः कारितः ॥ सं० ११२० चैत्रसुदि ७ प्रारभ्य सं० ११५० पौषवदि २ यावत् वर्ष २९ मास ८ दिन २१ अनेन राज्ञा राज्यं कृतं ।

९ अथ दिवं गते श्रीकर्णे श्रीमदुदयमतिदेव्या भ्राता मदनपालोऽसमञ्जसवृत्त्याऽवर्तत । तेन लीलाभिधानो राजवैद्यो दैवतवरलब्धप्रसादः सकलनागरिकैस्तत्कलाचमत्कृतचित्तैः[1] काञ्चनदानपूजयाऽभ्यर्च्यमानः कदाचिन्निजसौधे समानीतः कृतके[2] शरीरामये नाडीदर्शनात्पथ्यसज्जतां निवेदयन्निदमूचे । तदेव नास्तीति । ततस्त्वं मया रोगप्रतीकाराय नाकारितः किंतु पथ्यदानेन बुभुक्षाप्रतीकारार्थमेव । ततो द्वात्रिंशत्सहस्राण्युपनयेत्युक्त्वा तेन बन्दीकृतस्तत्तथेति[3] निर्मायेत्यभिग्रहमग्रहीत् । यदतः परं प्रतीकारनिमित्तं नृपतेः सौधमपहाय नान्यत्र गन्तव्यमिति ।

१० ततः परमातुराणां प्रस्रवणालोकनान्निदानचिकित्सितं कुर्वाणः केनापि मायाविना कृतकामयचिकित्सितकौशलं बुभुत्सुना वृषभप्रस्रवणे दर्शिते सम्यक् तदवगम्य शिरोधूननपूर्वकं वृषभः स बहुखादनेन गोडितै[4] इत्यस्मै सत्वरमेव तैलनाली दीयतां नो चेद्विपत्स्यते इति तच्चित्ते चमत्कारमारोपयामास ।

११ अन्यदा राज्ञा निजग्रीवाबाधाप्रतीकारं पृष्टः । पलद्वयप्रमाणमृगमदपङ्कलेपेन शिरोऽर्त्तिरुपशाम्यतीति व्याहृते तथाकृते ग्रीवा सज्जीभूता ततो नृपसुखासनवाहिना पामरेण नरेण शिरोबाधाप्रतीकारं पृष्टः । करी[5]रमूलरसेन तन्मृत्तिकासहितेन लेपं विधेहीत्यभिदधे । ततो राज्ञा[6] किमेतदिति पृष्टे देशकालौ बलं शरीरप्रकृतिं च विमृश्यायुर्वेदविदा चिकित्सा क्रियते इति विज्ञपयतिस्म[7] ॥

---

१ तत्कलाहृतहृदयैः c B H　२ समानीय कृत्रिमे L B　३ इत्यादिष्टस्तत्तथेति b D H　४ मोडितः B H　५ वृद्धकरीर B　६ भूयो राज्ञा विप्रलब्धः b D उपालब्धः B H　७ विज्ञप्य गृहं गतः B

१२ अन्यदा धूर्तैः कैश्चिदेकसंमत्या पृथक् पृथक् युगलीभूय तत्प्रथमयुगलिकया विपणिमार्गे किमद्य यूयं वपुष्यपटव इति पृष्टः द्वितीययुगलिकया श्रीमुञ्जालस्वामिप्रासादसोपाने पृष्टः तृतीययुगलिकया तु राजद्वारे चतुर्थयुगलिकया द्वारतोरणे तथैव, ततो भूयो भूयः पृच्छोत्पन्नेन शङ्कादूषणेन तत्कालोत्पन्नमाहेन्द्रज्वरस्त्रयोदशदिने विपेदे स वैद्यः ॥ इति वैद्यलीलाप्रबन्धः ॥

१३ अथ सान्तूमन्त्रिण उपायाद्राजपाटिकाव्याजेन श्रीकर्णाङ्गजेनान्यायकारी मदनपालो व्यापादितः ॥

१४ अथ कश्चिन्मरुमण्डलवास्तव्यः श्रीमालवंश्य उदाभिधानो वणिक् प्रावृट्काले प्राज्याज्यक्रयाय निशीथे व्रजन् कर्मकरैरेकस्मात्केदारादपरस्मिन् जलैः पूर्यमाणे तान्के यूयमिति पप्रच्छ । तैर्वयममुकस्य कामुका इत्युक्ते ममापि कापि सन्तीति पृच्छन्, तैः कर्णावत्यां सन्तीत्यभिहिते स सकुटुम्बस्तत्र गतः वायटीयजिनायतने विधिवद्देवान्नमस्कुर्वन्कयापि लाछिनाम्न्या छिम्पिकया श्राविकया साधर्मिकत्वाद्ववन्दे । तया भवान् कस्यातिथिरित्युदीरितः, वैदेशिकोऽहमिति भवत्या एवातिथिरिति वदन् तया सह नीत्वा कस्यापि वणिजो गृहे कारितान्नपाकेन भोजयित्वा निजे तलके कापि गृहे निवासितः ।

१५ कालक्रमेण संपन्नसंपदिष्टिकाचितं गृहं चिकीर्षुः खातावसरे निरवधिं शेवधिमधिगम्य तामेव स्त्रियमाहूय समर्पयन् तया निषिद्धः । तत्प्रभावेण ततः प्रभृति स उदयनमन्त्रीति नाम्ना पप्रथे* । तेन

१ प्रणामपूर्वकं आकस्मिकं वपुरपाटवं पृष्टः B H २ श्रीमुञ्जालस्वामिप्रासादे चापृच्छ्यमानः शङ्काविषदोषेणैव मृतः H D ३ अथ सान्तूनामा मन्त्री अन्यायकारिणं तं मदनपालं कालमिव जिघांसुः कदाचित्कर्णाङ्गजं गजेऽधिरोप्य राजपाटिकाव्याजेन तद्गृहे नीत्वा पत्तिभिस्तं व्यापादयामास B L M ४ श्रीमालदेश्यः P ५ पोषमाणे B C ६ अपरस्मिन्पूर्यमाणेऽम्भोभिःके यूयमिति B ७ निर्मापितकायमाने निजतलके H L * यतः—

कृतप्रयत्नानपि नैव कांश्चन स्वयं याताननपि सेवते परान् ।
द्वयेऽपि नास्ति द्वितयेऽपि विद्यते श्रियः प्रचारो न विचारगोचरः ॥ इत्यधिकं पद्यं D B

कर्णावत्यामतीतानागतवर्तमानचतुर्विंशतिजिनसमलंकृतः श्रीउदयनविहारः कारितः । तस्यापरमातृकाश्चत्वारः सुताः चाहडदेवआम्बडबाहडसोलाकनामानोऽभूवन् ।

१६ अथान्यस्मिन्नवसरे सान्तूनामा महामात्यः करेणुस्कन्धारूढो राजपाटिकायां व्रजन् व्यावृत्तः स्वकारितसान्तूवसहिकायां देवनमश्चिकीर्षया तत्र प्रविशन् वारवेश्यास्कन्धन्यस्तहस्तं कमपि चैत्यवासिनं सितवसनं ददर्श । ततो गजादवरुह्य कृतोत्तरासङ्गः पञ्चाङ्गप्रणामेन तं नमश्चकार । तत्र क्षणं स्थित्वा भूयस्तं प्रणम्य प्रतस्थे । ततः स लज्जयाऽधोवदनः पातालं प्रविविक्षुरिव तत्कालं सर्वमेव परिहृत्य मलधारिश्रीहेमसूरीणां समीपे उपसम्पदमादाय संवेगरससम्पूर्णः श्रीशत्रुञ्जये गत्वा द्वादशवर्षाणि तपस्तेपे । *किञ्च तेनान्ये समानाः प्रतिबोधिताः मुनिश्चिन्तयति ।

४) रे रे चित्त कथं भ्रातः प्रधावसि पिशाचवत् ।
अभिन्नं पश्य चात्मानं रागत्यागात्सुखी भव ॥ १ ॥

५) संसारमृगतृष्णासु मनो धावसि किं वृथा ।
सुधामयमिदं ब्रह्मसरः किं नावगाहसे ॥ २ ॥*

१७ कदाचित्स मन्त्री श्रीशत्रुञ्जये देवपादानां नमस्करणायोपगतो दृष्टपूर्वमिव मुनिं तं प्रणम्य तच्चरित्रविचित्रितमनास्तं गुरुकुलादि पप्रच्छ । तत्त्वतो भवानेव गुरुरिति तेनोक्ते कर्णौ पिधाय पाणिभ्यामेवं मादिशेत्यज्ञातवृत्त्यैवं विज्ञपयंस्तेन मन्त्र्यूचे ॥

१ आस्थडदेवआम्बडदेवबाहडसोल्लाः c सोलदेवभट d H सोल्लः K L M २ गौतममिव नमश्चक्रे L D M * द्वितारकान्तर्गतः पाठः a L K M आदर्शेषु नोपलभ्यते ३ इति ध्यायन्स मुनिः कायोत्सर्गे तस्थौ B ४ तद्गुरु b c

६) जो जेण शुद्धधम्मम्मि ठाविंडे संजएण गिहिणा वा ।
सो चेव तस्स जायइ धम्मगुरू धम्मदाणाउं ॥

इति तस्मै मूलवृत्तान्तं निवेद्य तस्य दृढधर्मतां निर्ममे ॥

इति मन्त्रिसान्तूदृढधर्मताप्रबन्धः ॥

१८ अथानन्तरं श्रीमयणल्लदेव्या जातिस्मरणात्पूर्वभववृत्तान्ते श्रीसिद्धराजस्य निवेदिते श्रीमयणल्लदेवी श्रीसोमनाथयोग्यां सपादकोटिमूल्यां हेममयीं पूजामादाय यात्रायां प्रस्थिता । बाहुलोडनगरं प्राप्ता पञ्चकुलेन कदर्थ्यमानेषु कार्पटिकेषु राजदेयविभागस्याप्राप्त्या सबाष्पं पश्चान्निवृत्त्यमानेषु मयणल्लदेवी हृदयादर्शसङ्क्रान्ततद्बाधा[1] स्वयमेव पश्चाद्व्याघुटन्ती अन्तरान्तरायभूतेन[2] श्रीसिद्धराजेन विज्ञप्ता स्वामिन्यलममुना सम्भ्रमेण कुतो हेतोः पश्चान्निवर्त्त्यते इति राज्ञोक्ते यदैव सर्वथाऽयं करमोक्षो भवति तदैवाहं श्रीसोमेश्वरं प्रणमामि अशनं गृह्णामि नान्यथेति[3] श्रुत्वा राज्ञा पञ्चकुलमाकार्य तत्पट्टकस्याङ्के द्वासप्ततिलक्षानुत्पद्यमानान्विमृश्य तं पट्टकं विदार्य मातुः श्रेयसे करं मुक्त्वा करे जलचुलुकं मुञ्चति स्म ।

१९ ततः श्रीसोमेश्वरं गत्वा तया सुवर्णपूजया देवमभ्यर्च्य तुलापुरुषगजदानादीनि महादानानि दत्त्वा ।

७) *संग्रहैकपरः प्राप समुद्रोऽपि रसातलम् ।
दाता तु जलदः पश्य भुवनोपरि गर्जति ॥ १ ॥

८) सेनाङ्गपरिवाराद्यं सर्वमेव विनश्यति ।
दानेन जनितानन्दे कीर्तिरेकैव तिष्ठति ॥ २ ॥

---

१ तद्बाष्पधारा d २ अन्तरायीभूतेन H

३ नान्यथा किं चातः परमशननीरयोर्नियमश्च. D M * सुभाषितार्णवेऽपि पद्यमिदम् । ७, ८, ९ पद्यत्रितयं a H L M आदर्शेषु नोपलभ्यते B आदर्शे P मुद्रित पुस्तके चोपलभ्यते

९) दातुर्नार्थिसमो बन्धुर्भारमादाय यः परात् ।
लक्ष्मीरूपादविगमं निस्तारयति तं खलु ॥ ३ ॥

अतो महादानैर्मत्सदृशी कापि नाभून्न भवितेति दर्पाध्माता निशि निर्भरं सुप्ता । तपस्विवेषधारिणा तेनैव देवेन जगदे । इहैव मदीयदेव-कुलमध्ये काचित्कार्पटिकनितम्बिनी यात्रायै आयातास्ति तस्याः सुकृतं याचनीयं त्वयेत्थमादिश्य तिरोहिते तस्मिन्राजपुरुषैरालोक्य समानीता । तस्मिन्पुण्ये याचितेऽप्यददाना कथमपि यात्रायां किं व्ययीकृतमिति पृष्टा सती सा प्राह । अहं भिक्षावृत्त्या योजनशतान्तरमतिक्रम्य ह्यस्तन-दिवसे कृततीर्थोपवासा पारणकदिने कस्यापि सुकृतिनः पिण्याकमासाद्य तत्खण्डेन श्रीसोमेश्वरमभ्यर्च्य तदंशमतिथये दत्त्वा स्वयं पारणकमकार्षं । भवती पुण्यवती यस्याः पितृभ्रातरौ पतिसुतौ च राजानः । या त्वं बाहु-लोडकरं मोचयित्वा सपादकोटिमूल्यया पूजया श्रीसोमेश्वरं पूजितवती सा कथं मदीयपुण्यं[3] लब्धेच्छासि यदि न कुप्यसि तदा किञ्चिद्वच्मि । तत्त्वतस्तवपुण्यान्मदीयं पुण्यं महीतले महीयः । यतः—

१०) संपत्तौ नियमः शक्तौ सहनं यौवने व्रतम् ।
दारिद्र्ये दानमत्यल्पमपि लाभाय भूयसे ॥

इति युक्तेन वाक्येन तस्या गर्वं निराचकार ॥ सिद्धराजस्तु समुद्रोपकण्ठवर्ती एकेन चारणेन—

११) को जाणइ तुहँ नाह चीत तु हालेइँ चक्कवइलउ ।
लंकँहले वाहमग्गु निहालई करणउत्तु* ॥

इत्यादि स्तूयमानोऽभूत् ॥

---

१ देवायतने H L २ यात्रायां c D ३ अगण्यपुण्यमर्जयन्ती क्वशोऽपि पुण्ये कथं लुब्धासि C L ४ सा गर्वं विससर्ज b c D सर्वंकषं गर्वं विससर्ज B L H ५ कौ ६ हालंतु H ७ काले ८ मगा Bh * अधोलिखितमधिकं B L M आदर्शेषु इति स्तूयमाने द्वितीयेनैवमूचे— धाइधोय पाय जलनिहि जेसल ताहिलाइ । जीता सवि राय ?क्कि विभूषणु मेल्हिमू ॥

२१ एवं तत्र यात्रायां व्यावृत्ते राज्ञि छलान्वेषिणा यशोवर्मणा मालवकभूपेन गूर्जरदेशे उपद्रूयमाणे सान्तूसचिवेन त्वं कथं निवर्तसे इति प्रोक्तः स राजाह। यदि त्वं स्वस्वामिनः सोमेश्वरदेवयात्रायाः पुण्यं ददासीत्युदीरितस्तच्चरणौ प्रक्षाल्य तत्करतले तत्पुण्यदाननिदानं[1] जलचुलुकं निक्षिप्य तं राजानं निवर्तयामास। ततः श्रीसिद्धराजस्तद्वृत्तान्तोपगमनेन क्रुद्धस्तं[2] मन्त्र्येवमवादीत्। स्वामिन् यन्मया दत्तं तव सुकृतं याति ततस्तस्य सुकृतमन्येषामपि पुण्यवतां सुकृतं मया भवते प्रदत्तमेव। येन केनाप्युपायेन परचक्रं स्वदेशे प्रविशन्निवारणीयमेवेति[3] वदता तेन नृपतिरनुनीतः।

२२ ततस्तेनैवामर्षेण मालवमण्डलं प्रतिष्ठासुः[4] सचिवान् शिल्पिनश्च सहस्रलिङ्गधर्मस्थानकर्मस्थाये नियोज्य त्वरितगत्या तस्मिन्निष्पद्यमाने नृपतिः प्रयाणकमकरोत्। तत्र स्वजयकारपूर्वकं द्वादशवार्षिके विग्रहे संजायमानेऽद्य मया धाराभङ्गानन्तरं भोक्तव्यमिति कृतप्रतिज्ञो सचिवैः पत्तिभिः परमारराजपुत्रैः पञ्चशतीभिर्विपद्यमानैः राज्ञः प्रतिज्ञां दिनान्तेऽपि पूरयितुमक्षमैः कथञ्चित्तस्यां कणिकामयधाराभङ्गेन पूरितायां राजा पश्चाद्व्याघुटितुमिच्छुर्मुञ्जालसचिवं ज्ञापयामास[5]। तेनापि त्रिकचतुष्कचत्वरप्रासादेषु निजपुरुषान्नियोज्य धारादुर्गभङ्गवार्तायां क्रियमाणायां तद्वासिना केनापि पुरुषेण दक्षिणप्रतोल्यां[6] यदि परबलं ढौकते तदैव दुर्गभङ्गो नान्यथेति तद्वाचमाकर्ण्य स विज्ञप्तः सचिवस्तं व्यतिकरं राज्ञे गुप्तविज्ञप्तिकया निवेदयामास। राज्ञापि तद्वृत्तान्तवेदिना तत्र सैन्ये ढौकिते दुर्गमं दुर्गमन्तर्विमृश्य[7] यशःपटहनाम्नि बलवद्दन्तावलेऽधिरूढसामलनाम्नारोहकेण

१ अनिदानं D २ क्रुद्धो नृपः पराङ्मुखोऽजनि। एकदा राजानं D श्रीसिद्धराजः श्रीपत्तनमुपेत्य सांतूमालवकनृपयोस्तं वृत्तान्तमवगम्य H B L M श्रीपत्तनागतं श्रीसिद्धराजं तद्वृत्तान्तावगमनेन क्रुद्धं a ३ रक्षणीयं P ४ प्रति चियासुः B ५ कथंचिद्धारादुर्गभङ्गं कर्तुमप्रभूष्णुरयं B H L ६ प्रतोल्या a P ७ दुर्गमन्तर्दुर्गम विमृश्य P

पश्चाद्भागेन त्रिपोलिकपाटद्वये आहन्यमाने लोहमयार्गलायां भज्यमानायां बलाधिकतयान्तस्त्रुटितादृजात्कर्णाङ्गजमुत्तार्य स्वयं यावदवरोहति तावत्स गजः पृथिव्यां पपात । स गजः सुभटतया विपद्य वडसरग्रामे स्वयशोधवल एव यशोधवलनामा[1] विनायकरूपेणावततार[2] ॥

१२) सिद्धेः स्तनशैलतटीपरिणतिदलितद्वितीयदन्त इव ।
बिभ्राणो रदमेकं गजवदनः सृजतु वः श्रेयः ॥

इति तदीया स्तुतिः ॥

२३ इत्थं दुर्गभङ्गे सूत्रिते सति समराधिरूढं यशोवर्माणं षड्भिर्गुणैराबध्य तत्र निजामाज्ञां जगन्मान्यां दापयित्वा यशोवर्मरूपया प्रत्यक्षयशःपताकया रोचिष्णुः श्रीपत्तनं प्राप ।

२४ प्रतिदिनं सर्वदर्शनेष्वाशिर्वाददानायाहूतेषु यथावसरमाकारिता जैनाचार्याः श्रीहेमचन्द्रमुख्याः श्रीसिद्धराजमासाद्य नृपेण दुकूलदानादिभिरावर्जितास्तैः सर्वैरप्यप्रतिमप्रतिभाभिरामैर्द्विधापि पुरस्कृतो नृपायेत्याशिषं श्रीहेमचन्द्रः पपाठ—

१३) *भूमिं कामगवि स्वगोमयरसैरासिञ्च रत्नाकरा
मुक्तास्वस्तिकमातनुध्वमुडुप त्वं पूर्णकुम्भी[3] भव ।
धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा–
न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः ॥

२५ अस्मिन्काव्ये निःप्रपञ्चे प्रपञ्च्यमाने तद्वचनचातुरीचमत्कृतचेता नृपस्तं प्रशंसन्, कैश्चिदसहिष्णुभिरस्मच्छास्त्राध्ययनबलादेतेषां

१ यशोधवलो नाम C यशोदेवोनाम M २ यशः पटहो मृत्वा व्यन्तरोऽभूदिति जिनमंडनेनोक्तं ( जि. कु. प्रबन्धे )

* सिद्धहैमप्रशस्त्यां ( श्लो. २६ )

३ कुम्भो C

विद्धत्तेत्यभिहिते राज्ञा पृष्टाः श्रीहेमचन्द्राचार्याः— *पुरा श्रीजिनेन श्रीमन्महावीरेणेन्द्रस्य पुरतः शैशवे यद्व्याख्यातं तज्जैनव्याकरणमधीयामहे वयमिति तद्वाक्यानन्तरमिमां पुराणवार्त्तामपहायास्माकमेव सन्निहितं व्याकरणकर्तारं कमपि ब्रूतेति तत्पिशुनवाक्यादनु ते प्राहुः। यदि श्रीसिद्धराजः सहायीभवति तदा कतिपयैरेव दिनैः पञ्चाङ्गमपि नूतनं

* B D आदर्शयोरत्र निम्नावतारितो वृत्तान्तोऽधिक उपलभ्यते— कैश्चिदसहिष्णुभिर्न मेने ॥ हेमचन्द्रनामा शिष्यः कदाचिन्नवलुञ्चितशिरा जलविहरणाय व्रजन् गजभयात्सौधभित्तिस्थितो गवाक्षस्थेनालिगपुरोहितेन सारिणा पराभूतः गुरवो विज्ञप्तास्तैरुक्तो मिथ्या दुःकृतं देहि। तद्दुःखेन निःसृतोऽन्यगच्छीयदेवचन्द्रपद्माकराभ्यां सह श्रीकाश्मीरं प्रति। मार्गे नडोलग्रामे सप्तमोपवासे श्रीसरस्वती प्रसन्ना जाता निजमूर्त्तिर्दर्शिता मित्रयोर्निवेदिते। श्लोकसप्तशत्या ग्रामो वर्णितः मित्रद्वयस्य कार्यसिद्धिहेतोः स्तम्भतीर्थे प्रविशन्तः केनापि देशान्तरिणाकार्यविद्या समर्पिता। इत्युक्तं च। मम मरणसमये मम शवोपरि त्रिभिर्नाभिमण्डले मन्त्रः स्मरणीयः शवो वरं दास्यति। एवं कृते स्मशाने मध्यरात्रौ शवेनोत्थाप्य वरो दत्तः। श्रीहेमचन्द्रेण राजप्रबोधो याचितः। देवचन्द्रेण हस्तसिद्धेराकृष्टिविद्या। पद्माकरेण पाण्डित्यं। अत्रान्तरे कृतकृत्यहेमचन्द्रो वलितः। कालभैरवीयमध्ये चण्डिकाप्रासादे विश्रान्तस्तत्र लघुभैरवानन्दः शिष्यपञ्चशतीवृतः समेत्य, रेरे चण्डे चण्डे प्रचण्डे मह्यं मोदकान् देहीति भणित्वा सुवर्णमयकर्परमग्रे मुक्तं देव्या मोदकैर्भृतं। तेन सर्वेषां तेऽर्पिताः। हेमचन्द्रस्यापि हे शिष्य त्वमपि गृहाणेत्युक्तो तेन तस्यापि करौ स्तम्भयित्वोक्तं। यद्यस्ति सत्त्वं तदा त्वं भक्षयेथाः एवमुक्ते चरणयोः पतितः। ततः पत्तने आयातं श्रीजयसिंहदेवः सन्मुखमेत्य समानीय हेमचन्द्रं गजाधिरूढं प्रवेश्य च पुरोहिततिरस्कृतं सूरिं, राज्ञा गुरव उपरोध्य हेमचन्द्रस्य पदस्थापना कारिता ॥ श्रीहेमचद्रसूरयोऽष्टम्यां चतुर्दश्यां च श्रीजयदेवभुवनं प्रयान्ति। पौषधागारे श्रीस्थूलिभद्रचरितं वाचयन्तः पुरोहितेन राज्ञोग्रे उपहसिताः, महाराज कोयमसत्प्रलापः सर्वरसभोजने पूर्वपरिचितवेश्यागृहे कामनिग्रहः। परं किं क्रियते भवद्वल्लभाः। राज्ञोक्तं। आचार्या अत्र समेष्यन्ति तदा वक्तव्यं परोक्षे न। सूरिष्वागतेषु राज्ञोक्तं। किं २ वाचयन्तो वर्तध्वे यूयं। सूरिभिः समग्रमपि संक्षेपतः स्थूलिभद्रचरितं कथितं। आलिगेनोक्तं। महाराज, *विश्वामित्रपराशरप्रभृतयो इत्यादि, गुरुभिरुक्तं— *सिंहो बलीयो द्विरद इत्यादि० आलिगेनोक्तं। अस्माकमेव शास्त्राणि पठित्वास्माकमेव पतयः संजाताः। गुरुभिरुक्तं। जैनेन्द्रव्याकरणं किं भवदीयं यत्पुरा १ नृपे व्याकरणकर्तारं P

* अयमग्रे संपूर्णो वर्तते

व्याकरणं रचयामः ॥ अथ नृपेण प्रतिपन्नमिदं निर्वहणीयमित्यभिधाय तद्विसृष्टाः सूरयः स्वं स्थानं ययुः ।

२६ ततो यशोवर्मराज्ञः करे निःप्रतीकारां क्षुरीं समर्प्य तदग्रासने वयं गजाधिरूढाः पुरमध्ये प्रवेशं करिष्याम इति राज्ञः प्रतिश्रवमाकर्ण्य मुञ्जालमन्त्रिणा प्रधानवृत्तिं मुञ्चता किमिति राज्ञा निर्बन्धपृष्टेन—

१४) मा स्म सन्धिं विजानन्तु मा स्म जानन्तु विग्रहम् ।
आख्यातं यदि शृण्वन्ति भूपास्तेनैव पण्डिताः ॥

इति नीतिशास्त्रोपदेशात्स्वबुद्ध्यैव स्वामिना प्रतिज्ञातोऽयमर्थः सर्वथा-यतो न हित इत्युक्तं । ततो[1] वरमसून्परिहरामि न तु विश्वविदितं प्रति-श्रवमिति[2] नृपेणोक्ते मन्त्री दारुमयीं क्षुरिकां[3] पाण्डुवर्णसर्जरसेन पिहितां पृष्ठासनस्थस्य यशोवर्मणः करे समर्प्य तदग्रासनस्थो नृपतिः श्रीसिद्धराजः परमोत्सवेन श्रीमदणहिल्लपुरं प्रविवेश ।

२७ प्रावेशिकमङ्गलानन्तरं[4] नृपेण स्मारिते व्याकरणवृत्तान्ते बहुभ्यो देशेभ्यस्तद्वेदिभिः पण्डितैः सह सर्वाणि व्याकरणानि समानीय श्रीहेमाचार्यैः श्रीसिद्धहेमाभिधानं पञ्चाङ्गमपि व्याकरणं सपादलक्षग्रन्थप्रमाणं संवत्सरेण रचयाञ्चक्रे । राजवाह्यकुम्भिकुम्भे तत्पुस्तकमारोप्य सितातपवारणे ध्रियमाणे चामरग्राहिणीचामरयुग्मवीज्यमानं नृपमन्दिरमानीय प्राज्यवर्यपूजापूर्वं कोशागारे न्यधीयत । ततो राजाज्ञयान्यानि व्याकरणान्यपहाय तस्मिन्नेव व्याकरणे सर्वत्राधीयमाने केनापि मत्सरिणा भवदन्वयवर्णनाविरहितं व्याकरणमित्युक्ते श्रीहेमाचार्यः क्रुद्धं राजानं राजमानुषादवगम्य द्वात्रिंशच्छ्लोकान्नूतनान्निर्माय द्वात्रिंशत्सूत्रितपादेषु तान्सम्बन्धं दधानानेव लेखयित्वा प्रातर्नृपसभायां वाच्यमाने व्याकरणे चौलुक्यवंशोपश्लोककेन श्लोकान्वाचयन्नृपं संतोषयामास । यथा—

---

१–२ नृपस्तु प्रतिज्ञाभङ्गभीरुर्वरमसून्परिहरामि नतु विश्वविश्रुतं प्रतिश्रुतमिति नृपवचनात् H L M ३ छुरिकां C D ४ व्याकुलानन्तरं C ५ संवद्धान् D

१५) हरिरिवबलिबन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव ।
कमलाश्रयश्च विधिरिव जयति श्रीमूलराजनृपः ॥

इत्यादि । तथा च श्रीसिद्धराजदिग्विजयवर्णने द्व्याश्रयनामा ग्रन्थः कृतः ।

१६) भ्रातः संवृणु पाणिनिप्रलपितं कातन्त्रकन्था वृथा
मा कार्षीः कटु शाकटायनवचः क्षुद्रेण चान्द्रेण किम् ।
कः कण्ठाभरणादिभिर्बठरयत्यात्मानमन्यैरपि
श्रूयन्ते यदि तावदर्थमधुराः श्रीहेमचन्द्रोक्तयः ॥

२८ अथ श्रीसिद्धराजेन पत्तने यशोवर्मराज्ञस्त्रिपुरुषप्रभृतीन्सर्वानपि राजप्रासादान्सहस्रलिङ्गप्रभृतीनि च धर्मस्थानानि दर्शयित्वा प्रतिवर्षं देवदायपदे कोटिद्रव्यव्ययं निवेद्यैतत्सुन्दरमसुन्दरं वेति यशोवर्मा पृष्ट इत्यवादीत्। अहं ह्यष्टादशलक्षप्रमाणमालवदेशाधिपस्त्वत्तः पराभवपात्रं कथं भवेयं, परं महाकालदेवस्य दत्तपूर्वत्वाद्देवद्रव्यं मालवकः । तद्भुञ्जानास्तत्प्रभावादुदितास्तामिता वर्तामहे । भवदीयान्वयराजानोऽप्येतावद्देवद्रव्यव्ययनिर्वाहाक्षमा लुप्तसर्वदेवदायपदा विपदां पदं भविष्यन्ति ।

२९ अथ सिद्धराजः कदापि सिद्धपुरे रुद्रमहाकालप्रासादं कारयितुकामः कमपि स्थपतिं स्वसन्निधौ स्थापयित्वा प्रासादप्रारम्भलग्ने तदीयकलासिकां लक्षद्रव्येणोत्तमर्णगृहीतां मोचयामास । तां वंशशलाकामयीमालोक्य किमेतदिति राजा पप्रच्छ । ततो मया प्रभोरौदार्यपरीक्षानिमित्तमेतत्कृतमिति स्थपतिरुक्तवान् । ततस्तद्द्रव्यमनिच्छतेऽपि नृपतिनार्पितं । ततः क्रमेण त्रयोविंशतिहस्तप्रमाणे परिपूर्णे प्रासादेऽश्वपतिगजपतिनरप

---

१ चौलुक्यवंशोपश्लोकान् द्वात्रिंशत्सूत्रपादान्तेषु द्वात्रिंशत् श्लोकानवलोक्य प्रमुदितो राजा व्याकरणं विस्तारयामास B H L M २ कथां H L ३ वर्द्धापयित्वा C ४ मूलनाशं विनंक्ष्यन्ति H L M ५ कस्मिन्नप्यवसरे H L ६ तद्द्रव्यप्रत्यर्पणापूर्वं त्रयोविंशति H L

तिप्रभृतीनामुत्तमभूपतीनां मूर्त्तीः कारयित्वा तत्पुरो योजिताञ्जलिं स्वां मूर्त्तिं निर्माप्य देशभङ्गेऽपि प्रासादस्याभङ्गं याचितवान् । तस्य प्रासादस्य ध्वजारोपप्रस्तावे सर्वेषामपि जैनप्रासादानां पताकावरोहं कारितवान् । यथा मालवकदेशे महाकालवैजयन्त्यां सत्यां जैनप्रासादेषु न ध्वजारोप इति ।

३० अन्यदा सिद्धराजस्य मालवकमण्डलं प्रति यियासतः केनापि व्यवहारिणा सहस्रलिङ्गकर्मस्थाये[1] याच्यमाने विभागे तत्सर्वथाऽदत्त्वैव कृतप्रयाणस्य कतिपयदिनानन्तरं कोशाभावात्कर्मस्थायस्य विलम्बमवगम्य तेन व्यवहारिणा सुतस्य पार्श्वात्कस्यापि धनाधिपस्य वध्वास्ताडङ्कमपहार्य[2] तद्दण्डपदे द्रव्यलक्षत्रयं दत्तं । तेन कर्मस्थायैः[3] स जात इति वार्त्तां शृण्वतो मालवके वर्षाकालं तस्थुषो राज्ञो वचनगोचरातीतः प्रमोदः संजातः । अथ प्रावृषेण्ये घने प्रगल्भवृष्ट्या क्षोणीमेकार्णवां कुर्वति वर्द्धापनिकाहेतोः प्रधानपुरुषैः प्रहितः मरुदेशीयपुरुषो नृपतिपुरतः सविस्तरं वर्षास्वरूपं व्यज्ञपयत् । तदा त्वागतेन गूर्जरधूत्तण नरेण सहस्रलिङ्गसरो भृतमिति स्वामिन् वर्द्धाप्यसे[4] इति तद्वाक्यानन्तरमेव सिक्कपतितमार्जारस्येव मरुवृद्धस्य पश्यतः सर्वाङ्गलग्नमाभरणं नृपतिर्गूर्जराय ददौ ।

३१ अथ वर्षानन्तरं प्रत्यावृत्तः क्षितिपतिः श्रीनगरमहास्थाने दत्तावासो[5] नगरप्रासादेषु ध्वजस्यालोके[6] क एते प्रासादा इति ब्राह्मणान्पप्रच्छ । तैर्जिनब्रह्मादीनां प्रासादस्वरूपे निवेदिते सामर्षो राजा मया गूर्जरमण्डले जैनप्रासादानां पताकासु निषिद्धासु किं भवतामिह नगरे पताकावज्जिनायतनमित्यादिशंस्तैर्विज्ञपयांचक्रे । अवधार्यतां श्रीमन्महादेवेन कृतयुगप्रारम्भे महास्थानमिदं स्थापयता श्रीऋषभदेवनाथश्रीब्रह्म[7]प्रा-

---

१ सहस्रलिङ्गकर्मस्थायविभागं याचितो राजा तददत्त्वैव मालवकंप्रति प्रयाणमकरोत् a २ ताडङ्केऽन्यहारिते D ३ कर्मस्थायं परिपूर्णं शृण्वतो H ४ वर्द्धापयसे b c ५ मञ्चरचनाकृतसर्वावसरस्तत्र b H M ६ ध्वजव्रजमालोक्य c M ७ श्रीब्रह्मप्रासादयोः सुकृतिभि P

सादौ स्वयं स्थापितौ प्रदत्तध्वजौ तदनयोः प्रासादयोः सुकृतिभिरुद्ध्रियमाणयोश्चत्वारो युगा व्यतीताः। अन्यच्च श्रीशत्रुञ्जयमहागिरेर्नगरमिदमुपत्यकाभूमिः। यतो नगरपुराणे उक्तं—

१७) पञ्चाशदादौ किल मूलभूमे-
दशोर्ध्वभूमेरपि विस्तरोऽस्य।
उच्चत्वमष्टैव तु योजनानि
मानं वदन्तीह[1] जिनेश्वराद्रेः॥

इति कृतयुगे आदिदेवश्रीऋषभस्तत्सूनुर्भरतस्तन्नाम्ना भरतखण्डमिदं प्रतीतम्—

१८) *नाभेः सुतः[2] स वृषभो मरुदेविसूनु-
र्यो वै चचार समदृग् मुनियोगचर्याम्।
तस्यार्हताद्यमृषयः[3] पदमामनन्ति
स्वच्छः प्रशान्तकरणः समदृक् सुधीश्च[4]॥ १॥

१९) ×अष्टमो मरुदेव्यां तु नाभेर्जात उरुक्रमः।
दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम्[5]॥ २॥

इत्यादिपुराणोक्तान्युदीर्य विशेष[6]प्रत्ययाय श्रीवृषभदेवप्रासादकोशाच्छ्रीभरतभूपनामाङ्कितं पञ्चजनवाह्यं कांस्यतालमानीय नृपाय दर्शयन्तो जिनधर्मस्याद्यत्वं स्थापयामासुः[7]। ततः खेदमेदुरमनसा राज्ञा हायनान्ते जैनप्रासादेषु ध्वजारोपः कारितः।

---

१ इति C H * पद्यमिदं भागवतपुराणस्थं तत्र च पाठः—
नाभेरसावृषभ आस सुदेवीसूनु-
र्यो वै चचार समदृग् मुनियोगचर्याम्।
यत्पारहंस्यमृषयः पदमामनन्ति
स्वच्छः प्रशान्तकरणः परिमुक्तसङ्गः॥ भा. २–७–१०

२ स्तास्ति L ३ आर्हतश्च ऋषयः D आर्हसत्य H P ४ सुधीः सः D × अष्टमे मेरुदेव्यामिति पाठो भागवते १–३–१३ ५ कृतः C D ६ यथावत्स्थिततदाद्यत्वस्थापनाय L H M ७ द्विजा जैनधर्मस्याद्यधर्मत्वं स्थापयांचक्रुः D H M

३२ अथ श्रीपत्तने प्राप्तो नृपः । प्रस्तावे सरोवरव्ययपदेषु[१] वाच्यमानेषु सापराधव्यवहारिसुतदण्डपदाल्लक्षत्रयं कर्मस्थाये व्यवकलितमिति श्रुत्वा लक्षत्रयं तस्य गृहे प्रस्थापयामास । ततः स व्यवहारी उपायनपाणिर्नृपोपान्तमुपेत्य किमेतदिति विज्ञपयन् राज्ञादिष्टः । यः कोटिध्वजो व्यवहारी स कथं ताडङ्कचौरस्त्वयाऽस्य धर्मस्थानस्य धर्मविभागः प्रार्थितोऽपि यन्न लब्धस्ततः प्रपञ्चचतुरेण मृगमुखव्याघ्रेणान्तःशठेन प्रत्यक्षसरलेन त्वयेदं कर्म निर्मितम् ॥*

३३ अथ श्रीपालकविना सहस्रलिङ्गसरोवरस्य रचितायां प्रशस्तिपट्टिकायामुत्कीर्णायाम्‡ तत्प्रशस्तिशोधनाय सर्वदर्शनेष्वाहूयमानेषु

१ सरोवरकर्मस्थायत्रिपदेषु c D H * निम्नावतारितो भागः a H L M आदर्शेषु नास्ति परन्तु मुद्रितपुस्तकेऽधिको वर्तते—

यतः—परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥
मुखं पद्मदलाकारं वाचश्चन्दनशीतलाः ।
हृदयं कर्त्तरीभूतमेतद्धूर्तस्य लक्षणम् ॥ २ ॥

इत्यादि वाक्यैर्भृशं खण्डितः ।

‡ मुद्रितपुस्तके निम्नलिखितमधिकं—तत्स्थकाव्यमिदम् ।

न मानसे मायति मानसं मे
पम्पा न संपादयति प्रमोदम् ।
अच्छोदकाच्छोदकमत्र सारं
विराजते कीर्तितसिद्धिभर्तुः ॥

( पद्यमिदं a H L M आदर्शेषु नास्ति परन्तु कीर्तिकौमुद्यां वर्तते तत्र च पाठभेदो यथाः—

... ... ... ... ...
... ... ... ... ...
अच्छोदमच्छोदकमप्यसारं
सरोवरे राजति सिद्धभर्तुः ॥ ( १–७८ ) )

श्रीहेमचन्द्राचार्यैः सर्वविद्वज्जनानुमते प्रशस्तिकाव्ये भवता वैदग्ध्यं किमपि न प्रकाश्यमित्युक्त्वा *पण्डितरामचन्द्रोऽनुशिष्यस्तत्र प्रहितः। ततः सर्वविद्वद्भिः शोध्यमानायां प्रशस्तौ नृपोपरोधाच्छ्रीपालकवेर्दाक्ष्यदाक्षिण्याच्च सर्वेषु काव्येषु मन्यमानेषु—

२०) कोशेनापि युतं दलैरुपचितं नोच्छेत्तुमेतत्क्षमं
स्वस्यापि[2] स्फुटकण्टकव्यतिकरं पुंस्त्वं च धत्ते नहि।

---

१ अनुशिक्ष्यः B २ स्वस्थापि D

*निम्नावतारितो भागः मुद्रितपुस्तके ३३ प्रबन्धात्पूर्वं प्रदत्तः a H L M आदर्शेषु नास्ति—एकदा श्रीसिद्धेन रामचन्द्रः पृष्टो ग्रीष्मे दिवसाः कथं गुरुतराः। रामचन्द्रः प्राह—

देव श्रीगिरिदुर्गमल्ल भवतो दिग्जैत्रयात्रोत्सवे
धावद्वीरतुरङ्गवल्गनखुरक्षुण्णक्ष्मामण्डलात्।
वातोद्धूतरजोमिलत्सुरसरित्संजातपङ्कस्थली-
दूर्वाचुम्बनचञ्चुरा रविहयास्तेनातिवृद्धं दिनम्॥ १॥

लब्धलक्षा विपक्षेषु विलक्षास्त्वयि मार्गणाः।
तथापि तव सिद्धेन्द्र दातेत्युत्कन्धरं यशः॥ २॥

अथ कदाचिद्राज्ञा प्रथिलाचार्या जयमङ्गलसूरयः पुरवर्णनं पृष्टा ऊचुः—

एतस्यास्य पुरस्य पौरवनिताचातुर्यतानिर्जिता
मन्ये हन्त सरस्वती जडतया नीरं वहन्ती स्थिता।
कीर्तिस्तम्भमिषोच्चदण्डरुचिरामुत्सृज्य बाहोर्बला-
त्तन्त्रीकां गुरुसिद्धभूपतिसरस्तुम्बां निजां कच्छपीम्॥ १॥

अन्यच्च—

महालयो महायात्रा महास्थानं महासरः।
यत्कृतं सिद्धराजेन धरिण्यां तत्करोतु कः॥ २॥

यस्यान्तर्गिरिशागारदीपिकाः प्रतिबिम्बिताः।
शोभन्ते निशि पातालव्यालमौलिमणिश्रियः॥ ३॥

( तृतीयं पद्यं B H L M आदर्शेषु नास्ति a आदर्शे मुद्रितपुस्तके चासम्बद्धं प्रदत्तं कीर्तिकौमुद्यां ( स. १ श्लो. १४ ) च वर्तते )

एकोऽप्येष करोति कोशरहितो निष्कण्टकं भूतलं
मत्वैवं कमला विहाय कमलं यस्यासिमाशिश्रियत् ॥

विशेषेणास्मिन्काव्ये प्रशस्यमाने श्रीसिद्धराजेन पृष्टः श्रीरामचन्द्रश्चिन्त्यमेतदित्यवादीत् । अथ तैरेव सर्वैरनुयुक्तः, एतस्मिन्काव्ये सैन्यवाचको दलशब्दः कमलशब्दस्य नित्यक्लीबत्वमिति दूषणद्वयं चिन्त्यं । ततः सर्वानपि पण्डितानुपरुध्य दलशब्दो राजसैन्यार्थे प्रमाणीकारितः[1] कमलशब्दस्य तु लिङ्गानुशासनेनसिद्धं[2] नित्यक्लीबत्वं केन निर्णीयतं[3] इति पुंस्त्वं च धत्ते न वेत्यक्षरभेदः कारितस्तदा श्रीसिद्धराजस्य सञ्जातदृष्टिदोषेण पं० रामचन्द्रस्य वसतौ प्रविशत एव लोचनमेकं स्फुटितम् ॥

३४ अथ कदाचित् ॥

२१) आयुक्तः प्राणदो लोके वियुक्तो मुनिवल्लभः ।
संयुक्तः[4] सर्वथानिष्टः केवली स्त्रीषु वल्लभः ॥

इति[5] डाहलदेशीयनरपतियमलपत्रान्ते लिखितश्लोकव्याख्यानावसरे तूष्णींस्थितेषु पण्डितेषु श्रीहेमचन्द्राचार्यै राज्ञा पृष्टैर्हारशब्दमध्याहार्य व्याख्यातः । अन्यदा सपादलक्षक्षितिपतिना ।

२२) पइली ताव न अणुहरइ गोरीमुहकमलस्स ।
इति समस्यादोधकार्धे प्रहिते तैः कविभिरपूर्यमाणे ।
अदिठी[6] किमु उम्मीयइ पडिपयली[7] चन्दस्स ॥
इति श्रीहेमचन्द्रनामा मुनीन्द्रस्तां पूरयामास ॥

---

१ प्रमाणीकृतः D २ लिङ्गानुशासनासंसिद्धं H ३ निर्नीयते a ४ प्रयुक्तः d ५ डाहलदेशीयनृपतेः सान्धिविग्रहिकैरानीतयमलपत्रेषु श्लोकमेनं लिखितं निशम्य किमेतदिति पृष्टास्ते प्राहुः । तवैकैकप्रधाना भूयांसो विद्वांसस्तत्पार्श्वाद्बुबोधोऽयं श्लोको व्याख्येय इति तद्वाचमाकर्ण्य सर्वैरपि विद्वद्भिरज्ञाततदर्थैर्विमृशद्भिर्नृपेण पृष्टा हेमाचार्या हारशब्दमध्याहार्य व्याचख्युः H L B M आदर्शेष्वेवमत्रपाठः ७ ओलीतावनु अहरइ b अदिट्ठि किमवन्नियइ तडिपयली b D १

३९ अन्यदा श्रीसिद्धराजो नवघणाभिधानमाभीरराणकं निगृहीतुकामः पुरैकादशवारं निजसैन्ये पराजिते सति श्रीवर्धमानादिषु पुरेषु प्राकारं निर्माप्य[1] स्वयमेव प्रयाणकमकरोत्। तद्भागिनेयदत्ते सङ्केते सति वप्रपरावर्त्तकालेऽयं द्रव्यव्यापादित एव करणीयो नवघनो न पुनरस्त्रादिभिरिति परिग्रहदत्तान्तरस्थः[2] स विशालाच्छालाद्बहिराकृष्य[3] द्रव्यवासणैरेव ताडयित्वा व्यापादितः[4]। अयं द्रव्यव्यापादित एव कृत इति वचनविज्ञापनात् परिग्रहो[5] बोधितः।

अथ तद्राज्ञ्याः शोकपतिताया वाक्यानि—

२३) सइरू नहीं स राणई कुलाईउ नकुलाइ इ[6]।
सइ सउ षङ्गारिहिं प्राणकइ वइसानरि होमीइँ[7] ॥ १ ॥

२४) राणा सव्वे वाणिया जेसलु वड्डउ सेठि।
काहूं वणिजडु माण्डीयउ अम्मीणा गढहेठि ॥ २ ॥

२५) पइं गरुआ गिरनार काहू मणि मत्छरु धरिउ।
मारीतां षङ्गार एकसिहरु न ढालिउं ॥ ३ ॥

२६) जेसल मोडि मबाह वलिवलि विरूपं भावयिइ।
नइ जिम नवा प्रवाह नवघण[8] विणु आवइ नेंहि[9] ॥ ४ ॥

---

१ प्राकारप्रकारं निरूप्य D H २ इति याचिते राज्ञा जयसिंहदेवेन सः शालात् a ३ बहिराकृष्टो H L ४ तं व्यापादयामास L H ५ इति वचनबलात्तद्भागिनेयपरिग्रहः C ६ सयरू नहि स राण B न कुलाई न कुलाई H B ७ सईं सउ षंगारिहिं पाण किन वइसारि होमिया H B ८ वरुण C ९ नवयणविणआवै नही C

* वलीं गरुआ गिरिनार दीहू बोलावउहूयउ।
लहसि न बीजीवार एहासज्जणभारखम ॥
अम्हइ एतलइ संतो जडपभुवाअ पवावा।
नकुराणि मन कुरोसु वेउ खंगारिहि सउगिया ॥
मणतंबोलि म मागि झाखि मउघाडइ मुहिं।
देवलवाड उसागि खंगारिहि सउते गिया ॥
इत्यधिकानि वाक्यानि B आदर्शे

२७) वाढी तो वढवाणं वीसारतां न वीसरइ ।
सोनांसमा पराण भोगावह पइं भोगवीइं ॥ ९ ॥

इत्यादीनि बहूनि वाक्यानि यथावसरं मन्तव्यानि ॥

३६ ततो महं० जाम्बान्वयस्य सज्जनदण्डाधिपतेः श्रीसिद्धराजेन योग्यतया सुराष्ट्रविषये व्यापारो नियुक्तः । तेन स्वामिनमविज्ञाप्य वर्षत्रयोद्ग्राहितेन श्रीमदुज्जयन्ते श्रीनेमीश्वरस्य काष्टमयं प्रासादमपनीय नूतनः शैलमयः प्रासादः कारितः । चतुर्थे वर्षे सामन्तचतुष्टयं प्रस्थाप्य सज्जनदण्डाधिपतिं श्रीपत्तने समानीय राज्ञा वर्षत्रयोद्ग्राहितद्रव्यं याचितः । तद्देशव्यवहारिणां पार्श्वात्तावद्द्रव्यमुपढौक्योज्जयन्तप्रासादजीर्णोद्धारपुण्यमुद्ग्राहितद्रव्यं वा द्वयोरेकमवधारयतु देवः । इति तेनोक्ते श्रीसिद्धराजस्तद्बुद्धिकौशल्यचमत्कृतस्तीर्थोद्धारपुण्यमेवोररीचकार । स पुनस्तस्य देशस्याधिकारमधिगम्य शत्रुञ्जयोज्जयन्ततीर्थयोर्द्वादशयोजनयोर्यावद्दुकूलमयं महाध्वजं ददौ । इति **रैवतकोद्धारप्रबन्धः*** ॥

३७ अथ भूयः सोमेश्वरयात्रायाः प्रत्यावृत्तः श्रीसिद्धाधिपो रैवतोपत्यकायां दत्तावासस्तत्रैव तत्कीर्तन दिदृक्षुः मत्सरोत्सेकपरैर्द्विजन्मभिः सजलाधारलिङ्गाकारोऽयं गिरिरित्यत्र पादस्पर्शं नार्हतीति कृतकवचनैर्निषिद्धस्तत्र पूजां प्रस्थाप्य स्वयं शत्रुञ्जयमहातीर्थसन्निधौ स्कन्धावारं न्यधात् । तत्र पूर्वोक्तैर्जातिपिशुनैः कृपाणिकापाणिभिरक्रूपैस्तीर्थमार्गे निरुद्धे सति श्रीसिद्धाधिपो रजनीमुखे कृतकार्पटिकवेषः स्कन्धनिहितविहङ्गिकोभयपक्षन्यस्तगङ्गोदकस्तन्मध्येभूत्वाऽपरिज्ञातस्वरूप एव गिरिमधिरुह्य गङ्गोदकेन श्रीयुगादिदेवं स्नपयन् पर्वतसमीपवर्त्तिग्रामद्वादशकशासनं श्रीदेवाचार्यै

१ वाटी तवडं वढमाण C २ सूना C ३ भोगावह पइं भोगिव्या C ४ सवनदण्ड D दण्डाधिपतिः a ५ सुराष्ट्रा B ६ द्वादशयोजनायामं b a K H
* रैवतकोद्धारप्रबन्धो प्रभावकचरिते हे—सू. प्रबन्धे ( श्लो. ३२७—३३७ ) जिनमंडनगणीयकुमारपालप्रबन्धेऽपि वर्तते
७ स्वं B ८ प्राकृतवेषः D

विश्राणयामास। तीर्थदर्शनाच्चोन्मुद्रितलोचन इवामृताभिषिक्त इव जातः। अत्र पर्वते सल्लकीवनसरित्पूरसंकुले इहैव विन्ध्यं करिष्यामीत्यवन्ध्यप्रतिज्ञो, हस्तियूथनिष्पत्तये विहस्तमनसं मनोरथेनापि तीर्थविध्वंसपातकिनं धिग्मामिति श्रीदेवपादानां पुरतो राजलोकविदितं स्वं निनिन्द। सानन्दो गिरेरवततार।

३८ अथ श्रीदेवसूरिचरितं व्याख्यास्यामः। तस्मिन्नवसरे कुमुदचन्द्रनामा दिगम्बरस्तेषु देशेषु चतुरशीतिवादैर्वादिनो निर्जित्य कर्णाटदेशाद्गुर्जरदेशं जेतुकामः कर्णावतीं प्राप। तत्र भट्टारकश्रीदेवसूरीणां चातुर्मासके स्थितानां श्रीअरिष्टनेमिप्रासादे धर्मशास्त्रव्याख्याक्षणे वचनचातुरीमनुच्छिष्टामाकर्ण्य तत्पण्डितैस्तद्वृत्तान्ते निवेदिते कुमुदचन्द्रस्तेषामुपाश्रये सतृणमुदकं प्रक्षेपितवान्। अथ तैर्महर्षिभिः पण्डितैः खण्डनतर्कादिप्रमाणप्रवीणैस्तस्मिन्नर्थेऽनाकर्णिततयाऽवज्ञाते सति श्रीदेवाचार्यजामिं तपोधनां चेटकैरधिष्ठितां विधाय नृत्यजलानयनादिभिर्विविधाभिर्विडम्बनाभिर्विडम्ब्य तेषु चेटकेष्वपहृतेषु तान् भृशं पराभवान्निर्भर्त्सनपरानपवार्य श्रीदेवसूरिभिरुक्तं वादविद्याविनोदाय भवता पत्तने गन्तव्यं। तत्र राजसभायां भवता सह वादं करिष्याम इत्यादिष्टे कृतकृत्यमनाः स आशावसनः श्रीपत्तनपरिसरं प्राप्तः। श्रीसिद्धराजेन मातामह गुरुरिति प्रत्युद्गमादिना सत्कृतस्तत्रावासान्दत्वा तस्थौ। श्रीसिद्धराजेन वादनिष्णाततां पृष्टाः श्रीहेमाचार्याः श्वेतसृषु विद्यासु परं प्रावीण्यं बिभ्राणं जैनमुनिगजयूथाधिपं सिताम्बरशासनवज्रप्राकारं नृपसभाशृङ्गारहारं कर्णावतीस्थितं श्रीदेवाचार्यT वादविद्याविदं वादीभकण्ठीरवं प्राहुः। अथ राज्ञा तदाह्वानाय प्रेषितविज्ञप्तिकायां श्रीसंघलेखेन सममागतायां श्रीदेवसूरयः पत्तनं प्राप्य नृपोपरोधाद्वाग्देवीमाराधयामासुः। तया तु वादिवेतालीय-

१ विन्ध्यवनं रचयिष्यामीति. C २ शान्त्याचार्यकृतोत्तराध्ययनवृत्तौ। ३ उपाहृतेषु C ३ T अतः T पर्यन्तो भाग a आदर्शे नास्ति

श्रीशान्तिसूरिविरचितोत्तराध्ययनवृहद्वृत्तौ दिगम्बरवादस्थले चतुरशीति-विकल्पजालोपन्यासे भवद्भिः प्रतन्यमाने दिग्वाससो मुखे मुद्रा पतिष्यती-त्यादेशानन्तरं गुप्तवृत्त्या कुमुचन्द्रसन्निधौ पण्डितान्प्रस्थाप्य कस्मिन् शास्त्रे विशेषकौशलमिति ज्ञापिते।

२८) देवादेशयं किं करोमि सहसा लङ्कामिहैवानये
जम्बूद्वीपमितो नयेयमथवा वारांनिधिं शोषये।
हेल्लोत्पाटिततुङ्गपर्वतशिरोग्रावत्रिनेत्राचल–
क्षेपक्षोभविवर्धमानसलिलं बध्नामि वा वारिधिम् ॥

इति तदुक्तिश्रवणात्सिद्धान्तकुशलतां तस्याल्पीयसीमवगम्य जितं मन्यमानाभ्यां श्रीदेवाचार्यश्रीहेमचन्द्राभ्यां प्रमुदितं T। अथ देवसूरिप्रभो रत्नप्रभाभिधानः प्रथमशिष्यः क्षपामुखे गुप्तवेषतया कुमुदचन्द्रस्य गुरूदरे गतः। तेन कस्त्वमित्यभिहिते अहं देवः। देवः कः। अहं। अहं कः। त्व। त्वं कः। श्वा। श्वा कः। त्वं। कः अहं देव इति तयोरुक्तिप्रत्युक्तिबन्धे चक्रभ्रमं भ्रमति, आत्मानं देवं दिगम्बरं श्वानं च संस्थाप्य यथागतं जगाम। तेन चक्रदोषप्रादुष्करणेन विषादनिषादसम्पर्कात्।

२९) *हंहो श्वेतपटाः किमेष विकटाटोपोक्तिसंटङ्कितैः
संसारावटकोटरेऽतिविकटे मुग्धो जनः पात्यते।

---

१ शान्तिसूरिकृतोत्तराध्ययनसूत्रवृत्तौ ( ३–९ ) वर्ततेऽयमुपन्यासः। २ देवाज्ञापय D ३ अथानये किं C ४ वारांनिधिं D

T अत्र निम्नावतारितो भाग H आदर्शेऽधिकः:-

अथ वाहडनामा महोपासकः श्रीदेवसूरिं व्यजिज्ञपत् प्रभो प्रकटकपटेन दिक्पटेन गागिलाद्याः प्रधानपुरुषाः द्रव्यव्ययं विधाय भेदिताः सन्ति। यदि पूज्या आदिशन्ति तदा अहमपि तथा करोमीति श्रुत्वा देवसूरयः प्राहुः यदि ब्राह्मीप्रसादतो न जयस्तत्किमुत्कोचैः संकोचैः सत्यसंविदो ततोऽलमनेन प्रयासेन।

५ विषादसम्पर्कात् B * पद्यमिदं मुद्रितकुमुदचन्द्रनाटकादुद्धृतम् ( अं. १ श्लो. २१ )

तत्त्वातत्त्वविचारणासु यदि वो हेवाकलेशस्तदा
सत्यं कौमुदचन्द्रमङ्घ्रियुगलं रात्रिंदिवं ध्यायत ॥

इमां तदुचितां कवितां निर्माप्य[1] समादाय कुमुदचन्द्रः श्रीदेवसूरीन्प्रति प्राहिणोत् ।

तदनु तच्चरणपरमाणुर्बुद्धिवैभवावगणितचाणाक्यः पण्डितमाणिक्यः।

३०) *कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यङ्घ्रिणा
कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं कांक्षति ।
कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये
यः श्वेताम्बरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥

अथ रत्नाकरपण्डितः—

३१) Tनग्नैर्निरुद्धा युवतीजनस्य
यन्मुक्तिरत्र प्रकटं हि तत्त्वम् ।
तत्किं वृथा कर्कशतर्ककेलौ
तवाभिलाषोऽयमनर्थमूलः ॥

इति कुमुदचन्द्रं प्रति सोपहासं प्राहिणोत् ॥

अथ श्रीमयणल्लदेवी कुमुदचन्द्रपक्षपातिनी, अभ्यासवर्त्तिनः सभ्यांस्तज्जयाय नित्यमुपरोधयन्तीति श्रुत्वा श्रीहेमचन्द्राचार्येण वादस्थले दिगम्बराः स्त्रीकृतं सुकृतमप्रमाणीकरिष्यन्ति, सिताम्बरास्तं स्थापयिष्यन्तीति तेषामेव पार्श्वात्तद्वृत्तान्ते निवेदिते राज्ञी व्यवहाराद्बहिर्मुखे दिगम्बरे पक्षपातमुज्झांचकार । अथ भाषोत्तरलेखनाय सुखासनसमासीनः कुमुदचन्द्रः पण्डितरत्नप्रभश्चचरणचारेणाऽक्षपटले[2] समागतौ । तदधिकृतैः—

१ निर्माय समये a * पद्यमिदं मुद्रितकुमुदचन्द्रनाटकादुद्धृतम् ( अं.१ श्लो.२२ T पद्यं मुद्रितकुमुदचन्द्रनाटकादुद्धृतम् ( अं, १ श्लो. ३४ ) तत्र माणिक्येनोक्तम्।
२ अक्षिपटले C M

३२) केवलिहूउं न भुञ्जइ चीवरसहिअस्स नत्थि निव्वाणं
इत्थी हूया न सिज्झइ ई मयमेयं कुमुदचन्दस्स ॥

कुमुदचन्द्र इति भाषां लेखयामास । अथ सिताम्बराणामुत्तरम्—

३३) केवलि हूउविभुञ्जइ चीवरसहिअस्स अत्थि निव्वाणं
इत्थी हूयावि सिज्झइ मयमेयं देवसूरीणं ॥

इति भाषोत्तरलेखनानन्तरं निर्णीतवादस्थलवासरे श्रीसिद्धराजे समाजमागतवति, षट्दर्शनप्रमाणवेदिषु सभ्येषु समुपस्थितेषु कुमुदचन्द्रवादी पुरो वाद्यमानजयडिण्डिमो ध्रियमाणसितातपत्रः सुखासनसमासीनः पुरो वंशाग्रलम्बमानपत्रावलम्बः सिद्धराजसभायां नृपप्रसादीकृतसिंहासने निषसाद । प्रभुश्रीदेवसूरयश्च श्रीहेमचन्द्रमुनीन्द्रसहिताः सभासिंहासनमेकमेवालंचक्रुः । अथ कुमुदचन्द्रवादी स्वयं ज्यायान् किञ्चिद्व्यतिक्रान्तशैशवं श्रीहेमचन्द्रं प्रति पीतं तक्रं भवतेत्यभिहिते श्रीहेमचन्द्रस्तं प्रति जरातरलितमते किमेवमसमञ्जसं ब्रूषे श्वेतं तक्रं पीता हरिद्रेति वाक्येनाधःकृतः। युवयोः को वादीति पृच्छन्, श्रीदेवसूरिभिस्तन्निराकरणार्थायं[1] भवतः प्रतिवादीत्यभिहिते कुमुदचन्द्रः प्राह । मम वृद्धस्यानेन शिशुना सह को वाद इति तदुक्तिमाकर्ण्याहमेव ज्यायान् भवानेव शिशुः योऽद्यापि कटीदवरकं[2]मपि नादत्से निवसनं च । इत्थं राज्ञा तयोर्वितण्डायां निषिद्धायामित्थं पणबन्धो मिथः समजनि पराजितैः श्वेताम्बरैर्दिगम्बरत्वमङ्गीकार्यं । दिगम्बरैस्तु देशत्याग इति निर्णीते पणबन्धादनु स्वदेशकलङ्कभीरुभिर्देवाचार्यैः सर्वानुवादपरिहारपरैर्देशानुवादपरायणैः कुमुदचन्द्रं प्रति प्रथमं भवान्कक्षीकरोतु पक्षमित्यभिहिते—

३४) *खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय[3]—
च्छायामाश्रयते शशी मशकतामायान्ति यत्राद्रयः ।

---

१ तत्तिरस्करणाय D H २ दोरकं A c M

* पद्यमिदं मुद्रितकुमुदचन्द्रनाटकादुद्धृतम् ( अं.५ श्लो.६) ३ उर्णुनाभालयछायां P

इत्थं वर्णयतो नभस्तव यशो जातं स्मृतेर्गोचरं ।
तत्तस्मिन्भ्रमरायते नरपते वाचस्ततो मुद्रिताः ॥

इति नृपं प्रत्याशिषं ददौ । वाचस्ततो मुद्रिता इति तदीयापशब्देन सभ्यास्तं स्वहस्तबन्धनमिति विमृशन्तो मुमुदिरे ।

अथ देवाचार्याः—

३५) नारीणां विदधाति निर्वृतिपदं श्वेताम्बरप्रोल्लस–
त्कीर्तिस्फातिमनोहरं नयपथप्रस्तारभङ्गीगृहम् ।
यस्मिन्[1]केवलिनो न निर्जित[2]परोत्सेकाः सदा दन्तिनो
राज्यं तज्जिनशासनं च भवत[3]श्चौलुक्य जीयाच्चिरम्† ॥ १ ॥

नृपं प्रतीमामाशिषं ददौ ॥ अथ वादी कुमुदचन्द्रः केवलिभुक्तिस्त्रीनिर्वाणचीरनिराकरणपक्षोपन्यासं पारावतविहङ्गमसदृशया[4] स्खलितगिरो प्रारभमाणः सभ्यैरन्तर्विहसद्भिः प्रत्यक्षप्रशंसापरैः पुरस्क्रियमाणः[5] । कियदुपन्यासप्रान्ते उच्यतामित्युक्तो देवाचार्यः । प्रलयकालोन्मीलितप्रचण्डपवनक्षुभिताम्भोधिनिचितवीचीसमीचीभिर्वाग्भिर्बृहदुत्तराध्ययनवृत्तेश्चतुरशीतिविकल्पजालोपन्यासे प्रक्रान्ते[6] भास्वत्प्रतिभाप्रसरपरिम्लानायमानकुमुदः कुमुदचन्द्रः सम्भ्रमभ्रान्तचेतास्तद्वचनान्यवधारयितुमक्षमो भूयस्तमेवोपन्यासं समभ्यर्थितवान् । सिद्धराजसभ्येषु निषेधपरेष्वपि अप्रमेयप्रमेयलहरीभिस्तं प्रमाणाम्भोधौ मज्जयितुं प्रारब्धे षोडशे दिने आकस्मिके देवाचार्यस्य कण्ठावग्रहे मान्त्रिकैः श्रीयशोभद्रसूरिभि[7]स्तुल्यकुरुकुल्लादेवीप्रसादलब्धवरैस्तत्कण्ठपीठारक्षणात्क्षपणककृतकार्मणानुभावात्केशचण्डुकः पातयांचक्रे । तच्चित्रनिरीक्षणाच्चतुरैः श्रीयशोभद्रसूरिः[8] श्लाघ्यमानः, कुमुदचन्द्रश्चामन्दं निन्द्यमानः, प्रमोदविषादौ दधाते । अथ श्रीदेवसूरिभिरुपन्या-

१ यस्मिन् H c २ विनिर्जित. H a c ३ भवतोः A b † पद्यमिदं मुद्रितकुमुदचन्द्राद्दुद्धृतम् (अं. ५ श्लो. ५) ४ उपमया सस्खलितस्खलितगिरा c ५ पुरस्क्रियमाणैः A ६ उपन्यासप्रक्रमे अवधत् A ७ वीरसूरिभिश्च c ८ यशोभद्रसूरिभिः P

सोपक्रमे कोटाकोटिरिति शब्दे प्रोच्यमाने, तच्छब्दव्युत्पत्तिं कुमुदचन्द्रे पृच्छति, कण्ठपीठे लुठिताष्टव्याकरणः पण्डितः काकलः टापटीपसूत्रनिष्पन्नं शाकटायनव्याकरणोदितं कोटाकोटिः कोटीकोटिः कोटिकोटिरिति सिद्धं शब्दत्रयनिर्णयं प्राह । अथ प्रथममेव वाचस्ततो मुद्रिता इति स्वयं पठितमिति स्वयमपशब्दप्रभावात्तदा तु प्रादुर्भूतमुखमुद्रः श्रीदेवाचार्येण निर्जितोऽहमिति स्वयमुच्चरन् श्रीसिद्धराजेन पराजितव्यवहारादपद्वारेणापसार्यमाणः संभवत्पराभवाविर्भावाद्बुद्धिस्फोटं[1] प्राप्य विपेदे ॥

३९ अनन्तरं तु श्रीसिद्धराजः प्रमोदमेदुरमनाः देवाचार्यप्रभावप्रभावनाचिकीर्मूर्ध्नि[2] धारितसितातपत्रचतुष्टयः प्रकीर्णकप्रकरवीज्यमानः स्वयं दत्तहस्तावलम्बः पूर्यमाणेषु[3] यमलशङ्खेषु रोदःकुक्षिंभरिविभ्रमं बिभ्रति निःस्वाननिस्वनैः स्फूर्जद्वर्यतूर्यपूर्यमाणदिगन्तराले[4] थाहडनाम्नोपासकेन[5] लक्षत्रयप्रमितद्रव्यव्ययकृतार्थीकृतार्थिसार्थे वादिचक्रवर्तिनः पादावधार्यतामिति स्तुतिव्रातैरमन्दानन्दकन्दकन्दलनकारिणि मङ्गले मुहुर्मुहुरुच्यमाने श्रीदेवाचार्यान् थाहडेन[6] तेनैव कारितप्रासादे श्रीमन्महावीरनमस्करणपूर्वं वसतौ प्रावेशयत्[7] । तत्पारितोषिके नृपतिः सूरिभ्योऽनिच्छद्भ्योऽपि छालाप्रभृतिग्रामद्वादशकं ददौ । तदुपश्लोकेन श्लोका एवं—

३६) वस्त्रप्रतिष्ठाचार्याय नमः श्रीदेवसूरये ।
यत्प्रसादमिवाख्याति सुखप्रश्नेषु दर्शनम् ॥

इति श्रीप्रद्युम्नाचार्यः ।

३७) यदि नाम कुमुदचन्द्रं नाजेष्यद्देवसूरिरहिमरुचिः ।
कटिपरिधानमधास्यत्कतमः श्वेताम्बरो जगति* ॥

इति हेमाचार्यः ।

---

१ ऊर्ध्वस्फोटं H D २ प्रभावनां चिकीर्षुः C ३ पूर्यमाणेषु दिगन्तरालेषु D ४ ऊर्जेतूर्य D ५ चाहड A ६ चाहडेन A D ७ प्रावेशयन् A b

* पद्यमिदं प्रभावकचरिते देवसूरिप्रबन्धेऽपि वर्तते ( २५१ )

३८) भेजेऽवकीर्णितां नग्नः कीर्तिकन्थामुपार्जयन्[1]।
तां देवसूरिराच्छिद्य तं निर्ग्रन्थं[2] पुनर्व्यधात् ॥

इति श्रीउदयप्रभदेवः।

३९)*वादविद्यावतोऽद्यापि[3] लेखशालामनुज्झतौ[4]।
देवसूरिप्रभोः साम्यं कथं स्याद्देवसूरिणा ॥

इति श्रीमुनिदेवाचार्यः।

४०) नग्नो यत्प्रतिभाघर्मार्त[5]कीर्तियोगपटं त्यजन्।
ह्रियेवात्याजि भारत्या देवसूरिर्मुदेऽस्तु वः ॥ १ ॥

४१) सत्रागारमशेषकेवलभृतां भुक्तिं तथा स्थापय-
न्नारीणामपि मोक्षतीर्थमभवत्तद्युक्तियुक्तोत्तरैः।
यः श्वेताम्बरशासनस्य विजिते नग्ने प्रतिष्ठागुरु-
स्तद्देवाद्गुरु[6]तोऽप्यमेयमहिमा श्रीदेवसूरिप्रभुः[7] ॥ २ ॥

इति मेरुतुङ्गसूरिणां द्वयमिति **देवसूरीणां प्रबन्धः**×।

**४०** ॥ अथ श्रीपत्तनवास्तव्य उच्छिन्नवंशकः आभडनामा वणिक्पुत्रः[8] कांस्यकारकहट्टे घर्घरकघर्षणं कुर्वंस्तत्र पञ्च विंषोपकानर्जयित्वा[9] दिनव्ययं कुर्वाणो द्विसन्ध्यमपि श्रीहेमसूरीणां चरणमूले प्रतिक्रमनं[10] प्रकृतिचतुरतयाऽधीतागस्त्यबौद्धमतादिरत्नपरीक्षाग्रन्थो रत्नपरीक्षकाणां सान्निध्यात्परीक्षादक्षः कदाचिच्छ्रीहेमचन्द्रसन्निधौ धनाभावात्परिग्रहप्रमाणनियमान्संकुचितान् गृह्णन् सामुद्रिकवेदिभिः प्रभुभिरायतौ तद्भाग्यवैभवप्रसरं विमृशद्भिस्तस्य लक्षत्रयद्रम्माणां परिग्रहमानं कारयद्भिः सह संतुष्टतया व्यवहरन्, कस्मिन्नप्यवसरे क्वापि ग्रामे यियासुरन्तरालेऽजाव्रजं

१ कण्ठामुपार्ज्य यः A २ निग्रन्थं P a ३ विदः A ४ अमुञ्चता H ५ धर्मात A ६ स्पर्द्धावान् गुरुतो ० लब्धप्रतिष्ठागुरुश्री देवाद्गुरुतः D ७ श्रीदेवसूरिः प्रभुः D
* मुनिदेवसूरिकृते शांतिनाथचरित्रे श्लोकबद्धेऽप्ययं श्लोकः १२
× अयं देवसूरिप्रबन्धो प्रभावकचरितेप्यस्ति, मुद्रितकुमुदचन्द्रनाटकेऽपि प्रबन्धस्यास्य वस्तु गुम्फितम् ८ श्रीमालज्ञातीयः D ९ पञ्च लोष्टिकान् ( राजशेखरकृत प्रबन्धकोशे पाठः ) १० प्रतिक्रामन् D

व्रजन्तमालोक्यैकस्या अजायाः कण्ठे पाषाणखण्डं रत्नपरीक्षकतया रत्नजातीयं परीक्ष्य तल्लोभाचां मूल्येन क्रीत्वा मणिकारपार्श्वात्समुत्तेजितं निर्माप्य सिद्धराजमुकुटघटनाप्रस्तावे लक्षमूल्यद्रव्येण तं नृपायैव ददौ । तेन नीवीधनेन मञ्जिष्ठास्थानकानि कदाचिदागतानि क्रीत्वा तद्विक्रयावसरे सांयात्रिकैर्जलचोरभयात्तदन्तर्निहिताः काञ्चनकम्बिकाः पश्यन् सर्वेभ्यः स्थानकेभ्यस्ताः संजग्राह । तदनन्तरं सर्वनगरमुख्यः श्रीसिद्धराजमान्यो जिनशासनप्रभावकः श्रावकः प्रतिदिनं प्रतिवर्षं यदृच्छया जैनमुनिभ्योऽन्नवस्त्रादि ददानो गुप्तवृत्त्या नव्यानि धर्मस्थानानि जीर्णानि च प्रशस्तिरहितानि स्वदेशेषु च समुद्दधार ॥

४२) वल्लीछन्नद्रुम[१] इव मत्स्नाच्छादितसमस्तबीजमिव ।
प्रायः प्रच्छन्नकृतं सुकृतं शतशाखतामेति ॥

इति साह[२] आभडप्रबन्धः* ॥

**४१** अथान्यस्मिन्नवसरे श्रीसिद्धराजः संसारसागरं तितीर्षुः प्रत्येकं सर्वदेशेषु सर्वदर्शनेषु देवतत्त्वधर्मतत्त्वपात्रतत्त्वजिज्ञासया पृच्छ्यमानेषु निजस्तुतिपरनिन्दापरेषु सन्देहदोलाधिरूढमानसः श्रीहेमाचार्यमाकार्य विचार्यकार्यं पप्रच्छ । आचार्यैस्तु चतुर्दशविद्यास्थानरहस्यं विमृश्येति पौराणिकनिर्णयो वक्तुमारेभे । यत्पुरा कश्चिद्व्यवहारी पूर्वपरिणीतां पत्नीं परित्यज्य संगृहिणीसात्कृतसर्वस्वः सदैव पूर्वपत्न्या पतिवशीकरणाय तद्वेदिभ्यः कार्मणककर्माणि पृच्छ्यमाने कश्चिद्गौडदेशीयो रश्मिनियन्त्रितं तव पतिं करोमीत्युक्त्वा किञ्चिदचिन्त्यवीर्यं भेषजमुपानीय भोजनान्तर्देयमिति भाषमाणः स गतः । कियद्दिनान्ते समागते क्षयाहनि तस्मिंस्तथा कृते स प्रत्यक्षवृषभतां प्राप । सा च तत्प्रतीकारमनवबुध्यमाना विश्वविश्वाक्रोशान्सहमाना निजं दुश्चरितं शोचन्ती कदाचिन्मध्यंदिने दिनेश्वरक-

१ छलीछन्न. A c २ वसाह A * अयं साहआभडप्रबन्धः ( आभडोत्पत्तिप्रबंधः ) प्राचीनेऽन्यस्मिन्पुस्तके नास्तीति डा. भाउदाजीना स्वकीयादर्शप्रान्तभागे लिखितम् । किन्तुचतुर्विंशतिप्रबन्धे वर्तते ।

ठोरतरकरनिकरप्रसरतप्यमानापि शाडलभूमिषु तं पतिं वृषभरूपं चारयन्ती कस्यापि तरोर्मूले विश्रान्ता निर्भरं विलपन्ती, आलापं नभस्यकस्माच्छुश्राव। तदा तत्रागतो विमानाधिरूढः पशुपतिर्भवान्या तद्दुःखकारणं पृष्टो यथावस्थितं निवेद्य तस्यैव तरोश्छायायां पुंस्त्वनिबन्धनमौषधं तन्निर्बन्धाद्‌दादिश्य तिरोदधे। सा तदनु तदीयां छायां रेखाङ्कितां निर्माय तन्मध्यवर्तिन औषधाङ्कुरानुच्छेद्य वृषभवदने क्षिपन्ती तेनाप्यज्ञातस्वरूपेणौषधाङ्कुरेण वदनन्यस्तेन स वृषभो मनुष्यतां प्राप। यथा तदज्ञातस्वरूपोऽपि भेषजाङ्कुरःसमीहितकार्यसिद्धिं चकार तथा कलियुगे मोहात्तदपि तिरोहितं पात्रपरिज्ञानं सभाक्तिकं सर्वदर्शनाराधनेनाऽविदितस्वरूपमपि मुक्तिप्रदं भवतीति निर्णयः। इति हेमचन्द्राचार्यैः सर्वदर्शनसन्माने[1] निवेदिते सति श्रीसिद्धराजः सर्वधर्माराधनां चकार। **इति सर्वदर्शनमान्यताप्रबन्धः॥**

**४२** ॥ अथान्यदा निशि कर्णमेरुप्रासादे नृपतिर्नाटकं विलोकयन् केनापि चणकविक्रयकारिणा वणिग्मात्रेण स्कन्धे[2]न्यस्तहस्तेन तल्लीलायितेन चित्रीयमाणमानसः स भूयो भूयस्तद्दीयमानं सकर्पूरबीटकं परितोषितो[3] गृह्णन् नाटकविसर्जनावसरेऽनुचरैस्तद्गेहादि सम्यगवगम्य सौधमासाद्य सुष्वाप। प्रत्यूषे भूपः कृतप्राभातिककृत्यः सर्वावसरेऽलङ्कृतसभामण्डपस्तं चणकविक्रयकारिणं विपणिनमाकार्य निशि स्कन्धन्यस्तहस्तभारेण ग्रीवा बाधते इत्यभिहिते तत्कालोत्पन्नमतिर्विज्ञपयामास। देव आसमुद्रान्तभूभारे स्कन्धाधिरूढे यदि स्वामिनो न बाधते स्कन्धस्तदा तृणमात्रस्य निर्जीवस्य मम पण्याजीवस्य भारेण[4] स्वामिनः कों स्कन्धबाधेति तदीयौचित्यविज्ञपनेन प्रमोदान्[5]नृपः पारितोषिकं ददौ ॥

**इति चणकविक्रयिवणिजः प्रबन्धः ॥**

**४३** अथान्यस्यां निशि नृपः कर्णमेरुप्रासादात्प्रेक्षणं प्रेक्ष्य प्रत्यावृत्तः

---

१ संमते A b H २ स्कन्धेन स्कन्धन्यस्तहस्तेन P a स्कन्धन्यस्तहस्तः H
३ परितोषिते P ४ भारेण का. D ५ प्रमोदवान् H P

कस्यापि व्यवहारिणो हर्म्ये बहून्दीपानालोक्य किमेतदिति पृष्टः स लक्ष-दीपांस्तान्विज्ञपयामास। असौ धन्य इति । स्वसौधमध्यमध्यास्य व्यतीत-क्षणदाक्षणः स धन्यमानिनं[1] तं सदः समानीयेत्यादिदेश । एतेषां सदा प्रदी-पानां प्रज्वालनेन भवतः सदा प्रदीपनं, तद्भवदीयवित्तस्य कियन्तो लक्षा इत्यभिहितः स विद्यमानांश्चतुरशीतिलक्षान्निवेदयामास । तदनुकम्पाक-म्पमानमानसः स्वकोशात्षोडशलक्षान्प्रसादीकृत्य तत्सौधे कोटिध्वजम-ध्यारोपयामास । **इति षोडशलक्षप्रबन्धः ॥**

**४४** अथान्यस्मिन्नवसरे राज्ञा कदाचिद्वालाकदेशे दुर्गभूमौ सिंहपुर-मिति ब्राह्मणानामग्रहारः स्थापितस्तच्छासने षड्उत्तरशतं ग्रामाः । अथ श्रीसिद्धराजः कदाचित्सिंहनादैर्भीतैर्विप्रैर्देशमध्यनिवासं याचितः साभ्रम-तीतीरवर्तिनमाशाम्बिली[2]ग्रामं तेभ्यो ददौ । तेषां च सिंहपुराद्धान्यान्या-दाय गच्छतामागच्छतां च दान[3]मोक्षं चकार ।

**४५** अथ राज्ञा सिद्धराजेन मालवकं प्रति कृतप्रयाणेन वाराहीग्राम-परिसरमाश्रित्य तदीयान् पैट्ट[4]किलानाहूय तच्चातुर्यपरीक्षाकृते निजां प्रधानां राजवाहनसेजवालीं[5] स्थपनिकार्थं[6] समर्पिता[7] । अथ नृपतौ पुरतः प्रयाते तैः सर्वैरपि संभूय तदङ्गानि प्रत्येकं विदार्य यथावाञ्छितं[8] स्वस्वसौधे निदधिरे। अथ यदा प्रत्यावृत्तो नृपस्तां स्थपनिकां[9] तेभ्यो याचमानस्तद्धौकितभि-न्नानि तदङ्गानि पश्यन् सविस्मयं किमेतदित्यादिशंस्तैर्विज्ञपयांचक्रे । स्वामिन्नेकः कोऽप्यस्य वस्तुनो गोपनविधौ न प्रभूष्णुर्मलिम्लुचादिभ्यः-[10] कदाचिदपाये संजायमाने सति कः प्रभोरुत्तरकर्तेति विमृश्यैतदस्माभि-

---

१ स धन्यंमानी. A धन्यमानी P  २ आशाम्बली A b  ३दाण b  ४ पट्टि c M  ५ यानविशेषं ६ स्थापनिकार्थं c  ७ समार्पयत. P  ८ यथोचितं c  ९ स्थापनिकां (न्यास थापण इति भाषायां) P a  १० मलिम्लुचानलादीनां कदाचिदपाये D

र्व्यवसितं । तदा राजा सविस्मयस्मेरमनास्तेषां बूच[1] इति बिरुदं ददौ । इति वाराहीयाबूचप्रबन्धः* ।

४६ अथ कदाचिच्छ्रीजयसिंहदेवो नृपतिर्मालवकं विजित्य प्रत्यावृत्तः । उञ्झा[2]ग्रामे निवेशितस्कन्धावारस्तैर्ग्रामीणैः प्रतिपन्नमातुलैर्दुग्धपरिपूर्णाहारादिभिरु[3]चितैः परितोष्यमाणस्तस्यामेव निशि गुप्तवृत्त्या तद्दुःखसुखजिज्ञासुः कस्यापि ग्रामीणस्य गृहे गतः । गोदोहादिव्याकुलतायामपि तेन कस्त्वमिति पृष्टः, श्रीसोमेश्वरस्य कार्पटिकोऽहं महाराष्ट्रदेशवास्तव्य इति तस्मै न्यवेदयत् । तेन च नृपतेः पार्श्वे महाराष्ट्रदेशस्य तन्महाराजस्य च गुणदोषवृत्तान्ते पृच्छमाने स नृपतेस्तस्य षण्णवतिराजगुणान्प्रशंसंस्तत्पार्श्वे गूर्जराधीश्वरगुणदोषान्पृच्छन् । श्रीसिद्धराजस्य प्रजापालनपाण्डित्यं सेवकेष्वतुल्यवात्सल्यं चेत्यादीन्गुणान्वर्णयंस्तेन कृत्रिमदोषे उत्पाद्यमाने सोऽस्माकं मन्दभाग्यतया नृपतेरपुत्रतालक्षण एव दोष इत्यश्रूणि मुञ्चन्नृपतिं निःकैतववृत्त्या परितोषयामास । अथ प्रभातकाले संभूय सर्वेऽपि मिलिता नृपदर्शनोत्कण्ठिताः सौधमध्यास्य प्रभोः प्रणामानन्तरं तदतुल्यपल्यङ्के निविष्टाः, आसनदाननियोगिभिः प्रदत्तेऽपि पृथगासने तत्सौकुमार्यं करस्पर्शेन विचिन्त्य वयमिह सुखसुखेन निषण्णास्तिष्ठाम इति नृपे स्मितमुखाम्भोजे तस्थुः । इति उञ्झा[4]वास्तव्यग्रामीणानां प्रबन्धः× ।

४७ अथ कदाचिज्झोला[5]ज्ञातीयमांगूनामा क्षत्रियः श्रीसिद्धराजसेवार्थं सभां गच्छन् प्रत्यहं पाराचीद्वयं[6] भूमौ निहत्योपविशति । उद्ध-

१ बूच P * अयं वाराहीयाबूचप्रबंधः पुस्तकान्तरे नोपलभ्यते इति डा. भाउ दाजीना स्वपुस्तके लिखितमस्ति २ कुण्डा c झञ्झा D ३ आवाहादिभिः A b प्रवाहादिभिः P ४ कुण्डा c × अयं उञ्झा ( कुंडा ) वास्तव्यग्रामीणानां प्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउ दाजीना स्वपुस्तके लिखितमस्ति ५ गाळा b ६ पाषाणभेदकः शस्त्रविशेषः ( पराई भाषायां )

रन्द्वयमुत्तिष्ठति[1]। तस्य च भोजने घृतपरिपूर्णः कुतुपे[2] एक एव व्यये याति-तस्य तु घृताभ्यक्तदाढिकानिर्माजने घृतषोडशांशोऽवशिष्यते । कदाचि-द्वपुरपाटवे पथ्यावसरे[3] पञ्चमानकप्रमितयवागूपथ्यप्रान्ते आयुर्वेदविदामृ-तोदकमर्धाहारे किमिति न पीतमित्युपालब्धः । यतः—

४३) पिबेद्घटसहस्रं तु यावन्नाभ्युदितो[4] रविः ।
उदिते तु[5] सहस्रांशौ बिन्दुरेको घटायते[6] ॥

रजन्याः पाश्चात्यघटिकाचतुष्टये सूर्यस्यानुदयावधि यत्पयः पीयते —जलयोगः क्रियते तद्ब्रह्मोदकं तदमृतोदकं, सूर्योदये समुत्पन्ने निरन्नैः प्रातर्यदुदकं पीयते तद्विषं, ततः बिन्दुरेको घटशतायते । भोजनार्धे यज्जलं पीयते तदमृतं, भोजनान्ते तत्कालपीतं पयः छत्रं छत्रोदकं[7]मिति भण्यते । तेन प्रोक्तं पुनः[8], पूर्वभुक्तमर्धाहारं[9] परिकल्प्य सम्प्रति पयः पीत्वा पुनरर्धाहारं करिष्यामीत्युपक्रममाणस्तेनैव वैद्येन निषिद्धः । नृप-तिना निरायुधकारणं पृष्टः, समयोचितं मे प्रहरणमिति विज्ञपयन्नन्यदा मज्जनावसरे हस्तिपप्रेर्यमाणं हस्तिनमालोक्य सन्निहितश्वानेन शुण्डादण्डे निहत्य मर्मस्थाननिपीडितस्य गजस्य पुच्छभागं स गृह्णन् तदीयातुलेन बलेनान्तस्त्रुटितस्य करटिन उत्तारिते हस्तिपके[10] भूपतितः सोऽसुभिर्व्य-युज्यत । स तु गूर्जरदेशभूपाले पलायिते समायातम्लेच्छान्समरे स्वेच्छ-योच्छेदयन् यत्र दिवं प्राप्तस्तत्र श्रीपत्तने मांगूस्थण्डिलमिति प्रसिद्धिः ।

**इति मांगूझालाप्रबन्धः ।**

४८ अन्यदा म्लेच्छप्रधानेषु[11] समायातेषु मध्यदेशागतान्वेषकारका-नाहूय रहस्यं किञ्चिदादिश्य[12] विससर्ज नृपः । अथापरस्मिन्सायाह्ने च

१ उत्तिष्ठंस्तद्द्वयमुद्धरति C २ कुम्भः A D ३ व्याध्यवसरे A ४ अस्तमितः C ५ अस्तं याते C ६ बिन्दुर्घटशतायते C D ७ छत्रं छत्रोदकं C ८ ततोऽसौ C ९ पूर्वान्नं A १० उत्तरिते भूपतौ H C M उत्तारिते नृपतौ D ११ म्लेच्छेशेषु B १२ रहः स किंचिदाकृय D

समागते[1] प्रलयकालप्रचण्डपवनप्रादुर्भावे नृपः सुधर्मसधर्माणमास्थानी[2]मास्थाय यावदवलोकते तावदन्तरिक्षादवतरन्तं मस्तकन्यस्तकाञ्चनेष्टिकायुगेन काञ्चनशोभां बिभ्राणं पलादयुगलमालोक्य भयभ्रान्ते समाजलोके नृपचरणपीठे तदुपायनं विमुच्य भूपीठलुठनात्पूर्वं प्रणिपत्येति विज्ञपयामास। यदद्य देवार्चनावसरे लङ्कानगर्यां महाराजाधिराजः श्रीविभीषणो राजस्थापनाचार्यस्य रघुकुलतिलकस्य श्रीरामस्याभिरामगुणग्रामाभिरामस्य स्मरन् ज्ञानमयेन चक्षुषा सम्प्रति चालुक्यकुलतिलकं श्रीसिद्धराजावतारेऽवतीर्णं स्वयं स्वीयं स्वामिनमवधार्योत्कण्ठोत्कटायमा[3]नमानसोऽहं[4] तत्र प्रणामकरणायागच्छामीति किंवा प्रभुर्मामत्रागमनेनानुग्रहीष्यतीति विज्ञपयन्तौ प्रहितवान्। तन्निर्णयं श्रीमुखेन समादिशतु देवः। ताभ्यामित्यभिहिते नृपतिः किञ्चिदन्तर्विचिन्त्य स तावेवं समादिशत्। यद्वयमेव प्रफुल्लायलकलहरीप्रेर्यमाणाः स्वसमये स्वयमेव विभीषणमिलनाय समेष्याम इत्युदीर्य निजकण्ठशृङ्गारिणमेकावलीहारं प्रतिप्राभृतं प्रसादीकृतं[5]। प्रभुणाहमयमपि प्रैष्यप्रेषणावसरे[6] न विस्मरणीय इति विशेषविज्ञप्तिं विधायान्तरिक्षमार्गेण तद्राक्षसद्वन्द्वं तिरोधत्ते। तदैव ते म्लेच्छप्रधानपुरुषा भयभ्रान्ताः स्वपौरुषमुत्सृज्य नृपपुरत आहूता भक्तिभारभासुराणि वचांसि ब्रुवाणास्तद्राजाय समुचितमुपायनमुपनीय श्रीसिद्धराजेन व्यसृज्यन्त[7]। इति **म्लेच्छागमनिषेधप्रबन्धः*** ॥

४९ अथानन्तरं कोल्लापुर[8]नगरराजस्य सभायां बन्दिनः श्रीसिद्धराजस्य कीर्तिं वितन्वन्तः, तदा तथ्यं सिद्धराजं वयं मन्यामहे यदा प्रत्यक्षमप्यस्माकं कमपि चमत्कारं सिद्धराजो दर्शयतीत्येतद्ब्रुवाणेन तेन राज्ञा

---

१ अवसरे b H c D २ इन्द्रसभा. ३ अकुण्ठोत्कण्ठाघटमान. HD ४ नमः A C ५ प्रसादीकृत्य a H ६ आपृच्छनावसरे प्रभुणाहमन्यस्मिन्नपि. a H ७ व्यजृम्भन्त. D * अयं म्लेच्छागमनिषेधप्रबंधः पुस्तकान्तरे नास्तीति रा. भाउ दाजीना लिखितं ८ कौल्लाकपुर D

ते पराकृतास्तत्स्वरूपं नृपतेर्विज्ञपयामासुः । अथ स्वामिनि सभां निभालयति तच्चित्तवेदिना केनापि नियोगिनाञ्जलिबन्धपूर्वकं निजाभिप्राये प्रादुःक्रियमाणे राज्ञा स रहसि तत्कारणं पृष्टो नृपतेराशयं विज्ञपयन् द्रव्यलक्षत्रयसाध्योऽयमर्थ इति वाक्यविशेषमाह । तदैव दैवज्ञनिर्दिष्टे मुहूर्त्ते स नृपाललक्षत्रयमुपलभ्य वणिगाकारो भूत्वा सर्वभाण्डानि संगृह्य सिद्धसंकेतं[2] रत्नखचितं सुवर्णपादुकायुगलमतुलं योगदण्डं च मणिमयकुण्डलयुगलं च तद्विधयोगपिशुनं योगपट्टं च चण्डांशुरोचिश्चण्डातकं[3] सह नीत्वा पथानमुल्लङ्घ्य कतिपयैरहोभिस्तत्पुरे दत्तावासः । आसन्नायां दीपोत्सवनिशि तन्नगरराज्ञोऽवरोधे महालक्ष्मीदेव्याः पूजार्थं तत्प्रासादमुपेयुषि स कृतकसिद्धरूपस्तेन वेषेणालङ्कृतः, केनापि सद्भ्यस्तोत्पतनेन बर्बरेणानुगम्यमानो देव्याः पीठेऽकस्मात्प्रादुरासीत् । देव्या रत्नमयसुवर्णकर्पूरमयीं सपर्यां विरचयंस्तदवरोधाय तद्विधानि बीटकानि ददानः श्रीसिद्धराजनामाङ्कितं सिद्धवेषं पूजाव्याजात्तत्र नियोज्योत्पतनवशाद्बर्बरस्कन्धमधिरुह्य यथागतमगात् । निशावसाने समयेऽवरोधैस्तं विरोधीनृपवृत्तान्तं ज्ञापितः सन् भयभ्रान्तो नृपः स्वप्रधानपुरुषैस्तत्प्राभृतं सिद्धाधिपतये प्राहिणोत् । अथ तेन नियोगिना भाण्डादिक्रयविक्रयं संक्षिप्य । ममागमनावधि नैतेषां प्रधानानां दर्शनं देयमिति वेगवता पुरुषेण विज्ञपयामास । तदनु झटिति कतिपयैर्दिनैस्तत्र समुपेतः । तत्स्वरूपं[1] विज्ञप्तो नृपतिस्तेषां प्रधानानां तदुचितामावर्जनां चकार । इति कोल्लापुरराजप्रबन्धः* ॥

९० श्रीसिद्धराजेन मालवमण्डलाद्यशोवर्मा नृपतिर्निबध्यानीतः । अवसरे क्रियमाणे सीलणाभिधानकौतुकिना "बेडायां समुद्रो मग्न इति" तत्पृष्ठगायनेनापशब्दं ब्रूषे इति तर्जितो बेडासमानायां गूर्जरधरित्र्यां

१ तत्तत्त्व P २ सिद्धशङ्केव P ३ चन्द्रातपं P

* अयं कोल्लापुरराजप्रबन्धः पुस्तकेऽन्यस्मिन्नास्तीति डा. भाउदाजीना लिखितं

मालवकसमुद्रो मग्न इति विरोधालङ्कारमर्थापत्त्या परिहरन्प्रभोर्हेममयीं जिह्वां प्राप। इति कौतुकीसीलणप्रबन्धः ॥

८१ कदाचित्सिद्धराजस्य वाग्मी कश्चित्सान्धिविग्रहिको जयचन्द्रनाम्ना काशीपुरीश्वरेण श्रीमदणहिल्लपुरस्य प्रासादप्रपानिपानादिस्वरूपाणि पृच्छतेति दूषणमुक्तः। यत्सहस्रलिङ्गसरोवरवारि शिवनिर्माल्यं तदस्पृश्यतया तत्सेवमानो लोकद्वयविरोधेन तत्रत्यलोकः कथमुदितोदितप्रभावः स्यादिति। सिद्धाधिपेन सहस्रलिङ्गसरः कारयताऽनुचितमिदमाचरितमिति तस्य नृपतेर्वचसान्तः कुपितः स नृपं पप्रच्छ। अस्यां वाराणस्यां कुतस्त्यं पयः पीयते? नृपेण त्रिपथगाजलमित्यभिहिते किं नाम सुरसरिन्नीरं शिवनिर्माल्यं न यतः शिवोत्तमाङ्गमेव गङ्गानिवासभूमिः। इति जयचन्द्रराजेन गूर्जरप्रधानस्योक्तिप्रबन्धः ॥

८२ कस्मिन्नप्यवसरे कर्णाटविषयादागतेन सान्धिविग्रहिकेण श्रीमयणल्लदेव्या पितुर्जयकेशिराजस्य कुशलोदन्ते पृष्टेऽश्रुमिश्रलोचनेनेति सा विज्ञपयामास। स्वामिनि सुगृहीतनामा जयकेशिमहीन्द्रोऽशनावसरे पञ्जरात्क्रीडाशुकमाकारयन्, तेन मार्जार इत्युच्चरिते नृपः परितो विलोक्य निजभोजनान्धोऽधोभागवर्तिनमोतुमपश्यन् यदि तव बिडालेन विनाशः स्यात्तदाहं त्वया सह गमनं करवाणीति प्रतिज्ञाते स यावत्पञ्जरादुड्डीय तस्मिन्काञ्चनभाजने निषीदति तावदकस्मात्तेन वृकदंशेन तं विनाशितमालोक्य परित्यक्ताशनकवलः। उक्तियुक्तिवेदिना राजवर्गेण निषिध्यमानोऽपि—

४४) राज्यं यातु श्रियो यान्तु यान्तु प्राणा अपि क्षणात्।
या मया स्वयमेवोक्ता वाचा मा यातु शाश्वती ॥

इतीष्टदैवतमिव तामेव गिरं जपंस्तेनैव शुकेन सह दारुनिचितां

१ निजभोजनभाजनाधोभागवर्तिनं C D H M २ यान्तु मया D ३ देवतां C

चितां विवेश । इति वाक्याकर्णनाच्छोकाम्भोधिमग्नां श्रीमयणल्लदेवीं विशेषधर्मोपदेशहस्तावलम्बनेन विद्वज्जनः समभ्युद्दधार ।

८३ अथ सा पितुः श्रेयसे श्रीसोमेश्वरपत्तने यात्रां गता सती त्रिवेदिनं[1] कमपि ब्राह्मणमाकार्य तदञ्जलौ जलन्यासावसरे यदि भवत्रयपातकं लासि तदा ददामि[2] नान्यथेति तद्वचनविशेषपरितोषभाक् गजाश्वकाञ्चनादिभिर्युतं[3] पापघटमाददौ । स च तत्सर्वं विप्रेभ्यो ददानः किमिति देव्या पृष्टः प्राह । प्राक्तनपुण्यादस्मिन् जन्मनि नृपप्रिया नृपतिजननी भूत्वा लोकोत्तरैरेभिर्दानैः सुकृतैर्भावी भवोऽपि श्रेयस्कर इति विमृश्य भवत्रयपातकं मया जगृहे । भवत्या पापघटदाने उपक्रान्ते कश्चिदधमद्विजोऽपि पापघटं नीत्वा स्वं भवतीं च भवाम्भोधौ मज्जयिष्यतीति मया तु संन्यस्तसमस्तवित्तेन वित्तमेतदादाय पुनर्ददता लब्धादष्टगुणं[4] पुण्यं लब्धमिति श्रेयः स जगृहे । **इति पापघटस्य प्रबन्धः*** ॥

८४ ॥ अथ कदाचिन्मालवकमण्डलं विगृह्य स्वदेशनिवेशं प्रति चालितः श्रीसिद्धाधिपोऽन्तरालेऽप्रतिमल्लैर्भिल्लै रुद्धमध्वानमवधार्य तस्मिन्वृत्तान्ते ज्ञाते सति मन्त्री सान्तूनामा प्रतिग्रामं प्रतिनगरं घोटकमुद्ग्राह्य प्रतिवृषं पर्याणानि विन्यस्य मेलितातिदलबलेन[5] भिल्लान्वित्रास्य श्रीसिद्धराजं सुखेन समानीतवान् ॥ इति सान्तूमन्त्रिप्रबन्धो बुद्धिवैभवप्रबन्धो वा ॥×

८५ अथ कस्यांचिन्निशि द्वावकुण्ठावेव वण्ठौ श्रीसिद्धराजस्य चरणसंवाहनैर्[6]व्यापृतौ तं निद्रामुद्रितलोचनं विचिन्त्य तदाद्यो निग्रहानुग्रहसमर्थं श्रीसिद्धराजं सेवकजनकल्पवृक्षं सर्वराजगुणनिलयं प्रशशंस । अपरस्त्वस्यापि भूपतेः प्राज्यराज्यप्रदं प्राक्तनं कर्मैव श्लाघितवानेवमाकर्णिते[7] तेन राज्ञा तस्मिन्वृत्तान्ते तत्कर्मणः प्रशंसां विफलीकर्तुं स्वप्रशंसाकारिणः

१ त्रिवेदीवेदिनं A २ तदा ददासि a ३ दानैर्युतं D ४ लब्धादष्टगुणं P
* अयं पापघटप्रबन्धः पुस्तकान्तरे नास्तीति डा. भाउदाजीना लिखितं ५ बलस्तद्बलेन ८ दलस्तद्बलेन K × अयं सान्तूमन्त्रीप्रबन्धोऽन्यस्मिन्नास्ति पुस्तके इति डा. भाउदाजीना लिखितम् ६ संवाहना. D ७ आकर्णितेन P

प्रेष्यस्यापरस्मिन्नहन्यऽनिवेदिततत्त्वस्य प्रसादलेख[1]मार्पयत्[2]। यदसौ वण्ठाय तुरङ्गमशतस्य सामन्तता देयेत्यालिख्यं तं महामात्य-श्रीसान्तूपार्श्वे प्राहिणोत्। अथ स यावच्चन्द्रशालाया निःश्रेण्यामव-रोहति तावत्प्रस्खलितपदः पृथिव्यां पतदीषदङ्गभङ्गमङ्गीकृतवान्। तत्पृष्ठा-नुगामिनाऽपरेण वण्ठेन किमेतदिति पृष्टे तेन स्वस्वरूपे निवेदिते स मञ्च-कन्यस्तो गृहं गत्वा तमपरस्मै[2] समर्पितवान्। तत्प्रमाणेन महामात्यस्तस्मै शततुरङ्गमसामन्ततां ददौ। अथ तयोर्यथावद्वृत्तान्तेऽवधारिते नृपतिः कर्मैव बलीय इति तत्प्रभृति मेने यथा—

४९) *नैवाकृतिः फलति नैव कुलं न शीलं
विद्या न चापि मनुजेषु कृता न सेवा[3]।
पुण्यानि[4] पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः॥ १॥ इति वण्ठक-र्मप्राधान्यप्रबन्धः॥

४६) सो जयउ कूडच्छरडो[5] तिहुयणमज्झम्मि[6] जेसलनरिन्दो।
छित्तूण रायवंसं[7] इकं छत्तं कयं जेण॥ १॥

४७) महालयो महायात्रा—० ( इत्यादिपृ. १०२*टिप्पण्यां संपूर्णः)

४८) मात्रयाप्यधिकं किञ्चिन्न सहन्ते जिगीषवः।
इतीव त्वं धरानाथ धारानाथमपाकृथाः॥ २॥+

---

१ आलेख्य C २ प्रसादलेखं a

* वल्लभदेवकृतसुभाषितावल्यां श्लो. ३१०० अश्वघोषस्येति प्रदत्तस्तत्र:—
विद्या सहस्रगुणिता न च वाग्विशुद्धिः।
कर्माणि पूर्वशुभसंचयसंचितानीति पाठभेदः॥
भर्तृहरिकृतनीतिशतकेऽपि वर्तते ( ९६ ) पद्यमिदम्

३ तपोऽपि न च यत्नकृतापि सेवा a D ४ भाग्यानि b D ५ नरहो b ६ मज्झम्मि b ७ रायवंसे b + सिद्धहैमप्रशस्त्यां पद्यमिदम् ( श्लो. ३१ )

४९) मानं मुञ्च सरस्वति त्रिपथगे सौभाग्यभङ्गीस्त्यज
रे कालिन्दि तवाफला कुटिलता रेवे रयस्त्यज्यताम् ।
श्रीसिद्धेशकृपाणिपाटितरिपुस्कन्धोच्छलच्छोणित–
स्रोतोजातनदीनवीनवनितारक्तोऽम्बुधिर्वर्तते ॥ ३ ॥

५०) *श्रीमज्जैत्रमृगारिदेवनृपते सत्यं प्रयाणोत्सवे
पानीयाशयशोषणैः करटतो वीरव्रणा[2]काङ्क्षया ।
स्वीयस्वीयपतेर्विनाशसमयं सञ्चिन्त्य चिन्तातुरा
मत्सी रोदिति मक्षिका च हसति ध्यायन्ति वामं[3] स्त्रियः ॥ ४ ॥

५१) सपादलक्षः सह भूरिलक्षै[4]—
रानाकभूपाय नताय दत्तः ।
हृते यशोवर्मणि मालवोऽपि
त्वया न सेहे द्विषि सिद्धराज ॥ ५ ॥

इत्याद्या[5] बहुशः स्तुतयः प्रबन्धाश्च तदीयाः ॥

संवत्[6] ११५० पूर्वं श्रीसिद्धराजश्रीजयसिंहदेवेन वर्षाणि ४९ राज्यं कृतं ॥

## इति मेरुतुङ्गाचार्यकृते प्रबन्धचिन्तामणौ श्रीकर्णश्रीसिद्धराजयोर्विविधचरित्रनानावदातवर्णनो नाम तृतीयः प्रकाशः ॥

१ कृपाण C २ वीरव्रत b ३ वामभ्रुवः b ४ तूरि D * ५०,५१ श्लोकौ M आदर्शेन दृश्येते ५ इत्याद्या बहवस्तदीयाः स्तुतयः प्रबन्धाश्च ॥ D ६ संवत् ११५० वर्षे उपविष्टो जयसिंहदेवस्तथानेन वर्षं ४९ राज्यं कृतं P प्रद्युम्नसूरिकृत विचारसारस्योल्लेखः प्रथमसंपादकेनात्रकृतः ।

श्रीः

# प्रबन्धचिन्तामणिः

## चतुर्थः प्रकाशः

### कुमारपालप्रबन्धः

१ अथ परमार्हतश्रीकुमारपालप्रबन्धः प्रारभ्यते । श्रीमदणहिल्पुरपत्तने बृहति श्रीभीमदेवे साम्राज्यं पालयति श्रीभीमेश्वरस्य पुरे चउलादेवीनाम्नी[1] पण्याङ्गना पत्तने प्रसिद्धं गुणपात्रं रूपपात्रं च[2] तस्याः कुलयोषितोऽप्यतिशायिनीं प्राज्यमर्यादां नृपतिर्विमृश्य तस्यास्तद्वृत्तपरीक्षानिमित्तं सपादलक्षमूल्यां क्षुरिकां निजानुचरैस्तस्यै ग्रहणके दापयामास । औत्सुक्यात्तस्यामेव निशि बहिरावासे प्रस्थानलग्नमसाधयत् । नृपो वर्षद्वयं यावन्मालवकमण्डले विग्रहाग्रहात्तस्थौ[3] । सा चउलदेवी तद्वित्तग्रहणकप्रामाण्येन तद्वर्षद्वयं परिहृतसर्वपुरुषा शीललीलयैव तस्थौ । निस्सीमपराक्रमो भीमः कृती स्वेस्थानमागतो जनपरंपरया तस्यास्तां प्रवृत्तिमवगम्य तामन्तःपुरे न्यधात् । तदङ्गजो हरिपालस्तत्सुतस्त्रिभुवनपालस्तत्पुत्रः कुमारपालदेवः । स त्वविदितधर्मो[6]ऽपि कृपापरः परनारीसहोदरश्च । स तु सामुद्रिकवेदिभिर्भवदनन्तरमयं नृपो भविष्यतीति सिद्धनृपो विज्ञप्तस्तस्मिन्हीनजातावित्यसहिष्णुस्तस्य विनाशावसरमन्वेषयामास सततं । कुमारपालस्तं वृत्तान्तमीषद्विज्ञाय तस्मान्नृपतेः शङ्कमानमानसः तापसवेषेण निर्मितनानाविधदेशान्तरभ्रमणः कियन्त्यपि वर्षाण्यतिवाह्य पुनः पत्तनमागतः क्वापि मठे[7] तस्थौ । अथ श्रीकर्णदेवस्य श्राद्धावसरे श्रद्धालुतया निमन्त्रितेषु सर्वेष्वपि तपस्विषु श्रीसिद्धराजः प्रत्येकं तेषां तपस्विनां स्वयं पादौ प्रक्षा-

---

१ चऊलादेवीनामा C बकुलादेवी M बउलादेवी b H २ चातीव तस्याः c ३ विग्रहाय D ४ सा तु बउला b H ५ तृतीयवर्षे M H a ६ तु विदित धर्मोऽपि a P ७ श्रीमदादिभूपतेरशठो मठे c

लयन् कुमारपालनाम्नस्तपस्विनः कमलकोमलौ चरणौ करतलेन संस्पृश्य तदूर्ध्वरेखादिभिर्लक्षणै राज्यार्होऽयमिति निश्चलया दृशापश्यत्। तदिङ्गितैस्तं विरुद्धं विबुध्यमानस्तदैव वेषपरावर्त्तेन काकनाशं नष्टः। आलिङ्गनाम्नः कुलालस्यालये मृत्पात्राणां पाके रच्यमाने तदन्तर्निधाय तदानुपदिकेभ्यो रक्षितः[1] स क्रमात्ततः सञ्चरन् तद्विलोकनाकुलितेन राजलोकेन त्रासितः सन्निहितां दुर्गमां भूमिमनवलोक्य[2] क्वापि क्षेत्रे क्षेत्ररक्षकैः[3] क्रियमाणछिन्नकण्टकिशाखिशाखानिचये समुपचीयमाने तं तदन्तर्निधाय तेषु स्वस्थानमागतेषु, पादिकेन पदे तत्रानीते सर्वथा तत्रासम्भावनया कुन्ताग्रेण भिद्यमानेऽपि तस्मिंस्तमनासाद्य व्यावृत्ते राजसैन्ये द्वितीयेऽह्नि क्षेत्राधिकृतैस्ततः स्थानादुद्धृतः पुरतः क्वापि प्रान्तरान्तर्व्रजन्[4] क्वापि तरुच्छायायां विश्रान्तः सन् बिलान्मूषकं मुखेन रूप्यनाणकमाकर्षन्तं निभृतया दृशा विलोक्य यावदेकविंशसंख्यानि दृष्ट्वा पुनस्तेभ्य एकं गृहीत्वा बिलं प्रविष्टे पार्श्वा[5]न्यानि तु सर्वाणि स गृहीत्वा यावन्निभृतीभवति तावत्स तान्यनवलोक्य तदर्त्त्या विपेदे। स तच्छोकव्याकुलितमानसश्चिरं परितप्य पुरतो व्रजन्, कयापीभ्यवध्वा श्वशुरगृहात्पितृगृहं व्रजन्त्या, पथि पाथेयाभावाद्दिनत्रयं क्षुत्क्षामकुक्षिर्भ्रातृवात्सल्यात्कर्पूरपरिमलशालिशालिकरम्बेण सुहितीचक्रे। तदनु स विविधानि देशान्तराणि परिभ्रमन्स्तम्भतीर्थे महं० श्रीउदयनपार्श्वे शम्बलं याचितुमागतः। तं पौषधशालायामागतमाकर्ण्य तत्रागते तस्मिन्नुदयनेन पृष्टः श्रीहेमचन्द्राचार्यः प्राह। लोकोत्तराणि तदङ्गलक्षणानि वीक्ष्य सार्वभौमोऽयं नृपतिर्भावीत्यादिशत्। आजन्म दारिद्र्योपद्रुततया तां वाचं संदिग्धतया मन्यमानेन[6] तेन, क्षत्रिये नासंभाव्यमेतदिति[7] विज्ञप्ते, सं. ११९९ वर्षे कार्त्तिकवदि २ रवौ हस्तनक्षत्रे यदि भवतः पट्टाभिषेको न भवति तदाऽतःपरं निमित्तावलोकसंन्यास इति पत्रकमालिख्यैकं

१ राजपुरुषेभ्यो रक्षितः M K H २ दुर्गभूमिमवलोक्य a P ३ ध्वांक्षरक्षकैः M H ४ प्रातरान्तर्व्रजन् M P ५ पश्चादन्यानि H ६ यथार्थममन्यमानेन H ७ क्षत्रियेणासंभाव्य M a K

मन्त्रिणेऽपरं तस्मै समारोपयत्। अथ स क्षत्रियस्तत्कलाकौशलचमत्कृतमानसः यद्यदः सत्यं तदा भवानेव नृपतिः, अहं तु त्वच्चरणरेणुः, स कुमारपाल इति प्रतिश्रवं श्रावयन् किं नो नरकान्तराज्यलिप्सया भवतु कृतज्ञेन भवता वाक्यमिदमप्यऽविस्मरता जिनशासनभक्तेन सततमेव भाव्यमिति तदनुशास्तिं शिरःशेखरीकृत्यापृच्छ्य च मन्त्रिणा सह गृहं प्राप्तः। स्नानपानाशनादिभिः सत्कृतःयथायाचितं पाथेयं समर्प्य प्रस्थापितो मालवकदेशं गतः कुडङ्गेश्वरप्रासादे प्रशस्तिपट्टिकायां—

१) पुन्ने[१] वाससहस्से[२] सयम्मि वरिसाण नवनवइअहिए।
होही कुमरनरिन्दो तुह विक्कमराय सारित्थो॥

इमां गाथामालोक्य विस्मयापन्नमानसो गूर्जरनाथं सिद्धाधिपं परलोकगतमवगम्य ततः प्रत्यावृत्तो विलीनशम्बलोऽस्मिन्नगरे कस्यापि विपणिनो विपणादशनानन्तरं [३]पलायमानः श्रीमदणहिल्लपुरमुपेत्य निशि कान्दविकापणे धनाभावाद्भुक्तदशनो भगिनीपते राजश्रीकान्हडदेवस्य सदनमासाद्य राजमन्दिरादागतेन तेन पुरस्कृत्यान्तर्नीतः सद्भोजनादिभिः सुहितीभूतः सुष्वाप।

२ प्रातस्तेन भावुकेन स्वसैन्यं सन्नह्य नृपसौधमानीयाऽभिषेकपरीक्षानिमित्तं प्रथममेकः कुमारः पट्टे निवेशितः। तमुत्तरीयाञ्चलेनाप्यनावृण्वन्तमालोक्य तदपरो निवेशितस्तं योजितकरसम्पुटं वीक्ष्य तस्मिन्नप्यप्रमाणीकृते श्रीकान्हडदेवानुज्ञातः कुमारपालः संवृतवसनः उर्ध्वं पवनं गृह्णन् सिंहासने उपविश्य कृपाणं पाणिना कम्पयन् पुरोधसा कृतमङ्गलःपश्चाश-

१ पुण्णे c D २ बारसहरसे A ३ (व्यपेतोपायः b M) तमेव बन्दीचकार सत्वाकुलमाक्रन्दन्मिलितनगरलोकैर्द्वयोरपि निधनं निश्चित्य मम कृतकमूर्च्छा भवानपनयतु इत्यभिहितस्तेन मतिवैभवेन प्रत्युज्जीवितं मन्यस्तत्तथा कृत्वा तस्मादपायात्पलायमानः M A H

दूर्षदेश्यः सनिस्वानान्यनिस्वनं श्रीमता कान्हडदेवेन पञ्चाङ्गचुम्बितभूतलं नमोऽकारि ।

३ स प्रौढतया देशान्तरपरिभ्रमणनैपुण्येन राज्यशास्तिं स्वयं कुर्वन् राजवृद्धानामरोचमानस्तैः सम्भूय व्यापादयितुं व्यवसितः । सान्धकार-गोपुरेषु न्यस्तेषु घातुकेषु प्राक्तनशुभकर्मणा प्रेरितेन केनाप्याप्तेन ज्ञापि-तवृत्तान्तस्तं प्रवेशं विहाय द्वारान्तरेण वप्रं प्रविश्य तानि प्रधानान्यन्तक-पुरीं प्राहिणोत् ।

४ स भावुकमण्डलेश्वरः शालकसम्बन्धाद्राज्यस्थापनाचार्यत्वाच्च राज्ञो दुरवस्थामर्माणि जल्पति । पश्चाद्राज्ञोक्तं हे भावुक राजपाटिकायां सर्वा-वसरे च प्राक्तनदुरवस्थामर्मनर्म न भाषणीयं त्वयाऽतः परमेवंविधं सभासमक्षं नो वाच्यं विजने तु यदृच्छया वाच्यमिति राज्ञोपरुद्धः । उत्कटतयाऽवज्ञावशाच्च रे अनात्मज्ञ इदानीमेव पादौ त्यजसीति भाष-माणो मर्तुकामः औषधमिव तद्वचः पथ्यमपि न जग्राह । नृपस्तदाकार-संवरणेनाऽपन्हवं विधायाऽपरस्मिन्दिवसे नृपसङ्केतितैर्मल्लैस्तदङ्गभङ्गं कृत्वा नेत्रयुग्मं समुद्धृत्य ततस्तं तदावासे प्रस्थापयामास—

२) आदौ मयैवायमदीपि नूनं
न तद्दहेन्मामवहेलितोऽपि ।
इति भ्रमादङ्गुलिपर्वणापि
स्पृश्येत[2] नो दीप इवावनीपः[3] ॥

इति विमृशद्भिः समन्ततः सामन्तैर्भयभ्रान्तचित्तैस्ततः प्रभृति स नृपतिः प्रतिपदं सिषेवे ।

५ तेन राज्ञा पूर्वोपकारकर्तुः श्रीमदुदयनस्याङ्गजः श्रीवाग्भटदेवनामा महामात्यश्चक्रे । आलिङ्गनामा ज्यायान्प्रधानः ।

---

१ प्रदेशं K २ स्पृश्योऽपि D ३ स्पृशेत को दीपमिवावनीशम् K

६ महं० उदयनदेवस्य पुत्रो वाहडनामा कुमारः श्रीसिद्धराजस्य प्रतिपन्नपुत्रः श्रीकुमारपालदेवस्यावज्ञामेव मन्यमानैः सपादलक्षीयभूपतेः पत्तिभावं बभार । तेन श्रीकुमारपालभूपालेन सह विग्रहं चिकीर्षुणा तत्रत्यं सकलमपि सामन्तलोकं लञ्चोपचारदानैः स्वायत्तीकृत्य दुर्वारस्कन्धावारोपेतं सपादलक्षक्षोणीपतिं सहादाय देशसीमान्तमागतः । अथ चौलुक्यचक्रवर्ती अभ्यमित्रीणतया स्कन्धावारसमीपे निजं चमूसमूहं निवेशयामास । निर्णीते समरवासरे, निष्कण्टके क्रियमाणे सीमनि, सज्जीक्रियमाणायां चतुरङ्गसेनायां चउलिङ्गनामा पट्टहस्तिनो हस्तिपकः कस्मिन्नप्यागसि नृपेणाक्रुश्यमाणः क्रोधादङ्कुशं तत्याज । अथ सामलनामाऽमात्रगुणपात्रं महामात्रं पुष्कलवसुदानपूर्वकं तत्पदे नियोजितः सन् राज्ञा स्वकलहपञ्चानननामानमनेकपं प्रक्षरितं कृत्वा तदुपरि नृपासनं निवेश्य तत्र षट्त्रिंशदायुधानि नियोजयन्सकलकलाकलापसंपूर्णः कलापके चरणौ नियोज्य स्वयमारूढवान् । तदासनस्थश्चौलुक्यभूपालोऽपि संग्रामाधिकृतपुरुषैरुत्थापनिकां कार्यमाणेषु वाहडकुमारभेदादाज्ञाभङ्गकारिषु, इति सैन्यविप्लवमाकलय्य तं निषादिनमादिदेश पुरो गन्तुं, सन्मुखसेनायां सपादलक्षक्षितिपतिमतङ्गजं छत्रचामरसङ्केतादुपलक्ष्य विघटिते कटकबन्धे मयैवैकाकिना योद्धव्यमिति निर्णीय तेनाधोरणेन स्वसिन्धुरं तत्सन्निधौ नेतुमादिशन्नपि तमपि तथाऽकुर्वाणं विलोक्य त्वमपि विघटितोऽसीत्यादिशंस्तेन विज्ञपयांचक्रे । स्वामिन्कलहपञ्चाननो हस्ती सामलनामा हस्तिपकश्च द्वयं युगान्तेऽपि न विघटते परं परस्मिन्कुम्भिकुम्भे वाहडनामा कुमारस्तारध्वनिरधिरूढोऽस्ति यस्य हक्कया हस्तिनोऽपि भज्यन्ते इत्युक्त्वोत्तरीयाञ्चलयुगलेन सिन्धुरश्रवणौ पिधाय स निजं गजं प्रतिगजेन संघट्टयामास । अथ वाहडः पूर्वमात्मसात्कृतं चउलिङ्गनामानमारोहकं जानन् कृपाणपाणिर्निज-

१ चाहडनामा L २ आज्ञामवमन्यमानः c M ३ दानादिना b L ४ दुकूलवस्त्रदानपूर्वकं K H ५ विघटयिष्यते A ६ चाहडनामा L ७ युगलं सिन्धुरश्रवणयोरधिरोप्य L ८ चाहड L

गजात्कलहपञ्चाननकुम्भे पदं ददानः श्रीकुमारपालविनाशाशया, तेन नियन्त्रा पश्चात्कृते गजे स भूमौ पतितस्तलवर्गीयपदातिभिरधारि । तदनु चौलुक्यभूपतिना श्रीमदानाकनामा सपादलक्षनृपः शस्त्रसज्जो भवेत्यभिहितस्तन्मुखकमलं प्रति औचित्याच्छिलीमुखं व्यापारयन् प्रधानक्षत्रियोऽसीति सोपहासश्लाघया तं वञ्चयित्वा नाराचेन निर्भिद्य कुम्भीन्द्रकुम्भे पातयित्वा जितं जितमिति ब्रुवाणः स्वयं पोतं भ्रमयांचकारेति सर्वेषां सामन्तानां सर्वानपि तुरङ्गमान् स नृपतिराक्रम्य जग्राह । इति वाहड[1]कुमारप्रबन्धः ॥

६ तदनु चौलुक्यराजेन कृतज्ञचक्रवर्तिना आलिङ्गकुलालाय सप्तशतीग्राममिता विचित्रचित्रकूटपट्टिका ददे । ते तु निजान्वयेन लज्जमानाः अद्यापि सगरा[2] इत्युच्यन्ते । यैः छिन्नकण्टकान्तरे प्रक्षिप्य क्षितिपो रक्षितस्तेऽङ्गरक्षपदे प्रतिष्ठिताः ।

७ अथ सोलाकनामा[3] गन्धर्वोऽवसरे गीतकलया परितोषिताद्राज्ञः षोडशाधिकं द्रम्माणां शतं प्राप्य तेन सुखभक्षिकां विसाध्य बालकांस्तर्पयन् राज्ञा कुपितेन निर्वासितः । ततो[4] विदेशं गतस्तत्रत्यभूपतेर्गीतकलया रञ्जितात्प्रसादप्राप्तं गजयुगलमानीयोपायनीकुर्वन् चौलुक्यभूपालेन सम्मानितः । कदाचित्कोऽपि वैदेशिकगन्धर्वो मुषितोऽस्मि मुषितोऽस्मीति तारं बुम्बारवं कुर्वाणः, केन मुषितोऽसीति राज्ञाभिहितो मम गीतकलया समीपागतेन, मया कौतुकाद्गलन्यस्तकनकशृङ्खलेन[5] मृगेण त्रस्यता मृगेन्द्रेणेति[6] विज्ञपयामास । स तदनु भूपतिना समादिष्टः सोलाभिधानो गन्धर्वराडटवीमटन् स्फीतगीताकृष्टिविद्यया कनकशृङ्खलाङ्कितगलं[7] मृगं नगरान्तः सभानीय तस्य भूपतेर्दर्शयामास । अथ तत्कलाकौशलचमत्कृतमानसः प्रभुः श्रीहे-

१ चाहड L २ सागरा A b L ३ तस्य चौलुक्यराजः पट्टाभिषेकानन्तरं स सोलाकनामा M c ४ सकरेणुमारुह्य वि० c ५ सामीप्यमुपेयुषा कौतुकार्पितगलशृङ्खलेन b L ६ त्रस्यता इति विज्ञ–० K a M ७ गले खेलत्कनकशृङ्खलं D

माचार्यो गीतकलाया अवधिं पप्रच्छ। स शुष्कदारुणः पल्लवप्ररोहमवधिं विज्ञप्तवान्। तर्हि तत्कौतुकं दर्शयेत्यादिष्टः अर्बुदाद्रिरेर्विरहकनामानं वृक्षमाक्षेपादानाय्य तच्छुष्कशाखायाः[१] काष्ठं राजाङ्गणे कुमारमृत्तिकया कलशालवाले निवेश्य निजया नवगीतकलया सद्यः प्रोल्लसत्पल्लवं तं निवेदयन् सनृपतीन् भट्टारकश्रीहेमचन्द्रसूरीन् परितोषयामास। इति अच्छईकारसोलाकप्रबन्धः ॥

८ अथ कदाचित्सर्वावसरे स्थितचौलुक्यचक्रवर्ती कुङ्कुणदेशीयमल्लिकार्जुनाभिधानस्य राज्ञो मागधेन राजपितामह इति बिरुदमभिधीयमानमाकर्ण्य तदसहिष्णुतया सभां निभालयन्नृपचित्तविदा मन्त्रिणाऽम्बडेन योजितकरसम्पुटं दर्शयता चमत्कृतः, सभाविसर्जनानन्तरमञ्जलिबन्धस्य कारणं पृच्छन्नेवमूचे। यदस्यां सभायां स कोऽपि सुभटो विद्यते यं प्रस्थाप्य मिथ्याभिमानिनं चतुरङ्गनृपवन्नृपाभासं मल्लिकार्जुनं विनाशयाम इत्याशयविदा मया त्वदादेशक्षमेण चाञ्जलिबन्धश्चक्रे इति विज्ञप्तिसमनन्तरमेव तं नृपं प्रति प्रयाणाय दलनायैकीकृत्य[३] पञ्चाङ्गप्रसादं दत्त्वा समस्तसामन्तैः समं विससर्ज। स चानवच्छिन्नैः प्रयाणैः कुङ्कुणदेशमधिगम्य दुर्वारवारिपूरां कलविणिनाम्नीं सरितमुत्तरन् परस्मिन्कूले आवासेषु दीयमानेषु तं संग्रामसज्जं विमृश्य स मल्लिकार्जुननृपतिः प्रहरंस्तत्सैन्यं त्रासयामास। अथ तेन पराजितः स सेनापतिः कृष्णवदनः कृष्णवसनः कृष्णच्छत्रालङ्कृतमौलिः कृष्णगुरूदरे निवसन्, चौलुक्यभूभुजा विलोक्य कस्यासौ सेनानिवेश इत्यादिष्टे कुङ्कुणात्प्रत्यावृत्तस्य पराजिताम्बडसेनापतेः सेनानिवेशोऽयमिति विज्ञप्ते तस्य त्रपया चमत्कृतचित्तः प्रसन्नया[४] दृशा संभावयंस्तदपरैर्बलवद्भिः सामन्तैः समं मल्लिकार्जुनं जेतुं

१ शाखाखण्डं d. C २ छइ C ३ दलमेकीकृत्य P ४ प्रसादललितया C

पुनः प्रहितः । स तु कुङ्कुणदेशं प्राप्य तां नदीमासाद्य पद्याबन्धे[1] विरचिते तेनैव पथा सैन्यमुत्तार्य सावधानवृत्त्याऽसमसमरारम्भे हस्तिस्कन्धाधिरूढं वीरवृत्त्या मल्लिकार्जुनमेव निश्चलीकुर्वन् स आम्बडः सुभटो दन्तमुशलसोपानेन कुम्भिकम्भस्थलमधिरुह्य मायदुद्दामरणरसः प्रथमं प्रहर, इष्टदैवतं स्मरेत्युच्चरन् धारालकरालकरवालप्रहारान्मल्लिकार्जुनं पृथ्वीतले पातयन् सामन्तेषु तन्नगरलुण्टनव्यापृतेषु केसरिकिशोरः करिणमिव लीलयव जघान । तन्मस्तकं स्वर्णेन वेष्टयित्वा तस्मिन्देशे चौलुक्यचक्रवर्तिन आज्ञां दापयन् श्रीमदणहिल्लपुरं प्राप्य सभानिषण्णेषु द्वासप्ततिसामन्तेषु स्वामिनः श्रीकुमारपालनृपतेश्चरणौ कुङ्कुणदेशीयनृपमल्लिकार्जुनशिरसा समं ववन्दे ।

शृङ्गारकोडीसाडी, माणिकउ पछेडउँ[2], पापखउ हारु, संयोगसिद्धिसिप्रा, तथा हेमकुम्भा ३२, स्तथा[3] मौक्तिकानां सेडउँ[4] ६, चतुर्दन्तहस्ति १, पात्राणि १२०, कोडीसार्ध[5] १४ द्रव्यस्य दण्डः*

श्रीआम्बडेनैतैर्वस्तुभिः सह तच्छिरःकमलेन पुपूजे राजा । तदवदातप्रीतेन राज्ञा श्रीमुखेन श्रीमदाम्बडाभिधानमहामण्डलेश्वरस्य राजपितामह इति बिरुदं ददे । इति आम्बडप्रबन्धः ।

९ अथ कदाचिदणहिल्लपुरे श्रीहेमचन्द्रसूरयो दत्तव्रतायाः[6] पाहिणीनाम्न्याः स्वमातुः परलोकावसरे कोटिनमस्कारपुण्ये[7] दत्ते व्यापत्तेरनु

१ पद्यानुक्रमे A २ पछेवडो M K ३ तडा A ४ मुडा C M ५ कोटि C D

* जिनमण्डनगणिना कुमारपालप्रबन्धे दण्डस्यास्येत्थं वर्णनं कृतं–(पृ ३९)

शाटीं शृंगारकोटयाख्यां पटं माणिक्यनामकं ।
पापक्षयकरं हारं मुक्ताशुक्तिं विषापहाम् ॥
हैमान्द्वात्रिंशतं कुम्भान्मनुभारान्प्रमाणतः ।
षटमूटकांस्तु मुक्तानां स्वर्णकोटीश्चतुर्दश ॥
विंशं शतं च पात्राणां चतुर्दन्तं च दन्तिनं ।
श्वेतं सेदुकनामानं दत्वा नव्यं नवग्रहम् ॥

६ प्रेतायाः C ७ नवकार M

तत्संस्कारमहोत्सवे क्रियमाणे त्रिपुरुषधर्मस्थानसन्निधौ तत्तपस्विभिः सहजमात्सर्याद्विमानभङ्गापमाने सूत्रिते तदुत्तरक्रियां निर्माय तेनैव मन्युना मालवकसंस्थितस्य कुमारपालनृपतेः स्कन्धावारमलञ्चक्रुः।

३) आपण पइ[1] प्रभु होईअं कइ प्रभु कीजइं हाथि।
कज्ज करिवा[2] माणुसह बीजउ मागु न अत्थि[3] ॥

इति वचनं तथ्यं[4] विमृशन्तः[5] श्रीमदुदयनमन्त्रिणा नृपतेर्निवेदितागमनाः कृतज्ञमौलिमणितया परोपरोधात्सौधमानीताः। तद्राज्यप्राप्तिनिमित्तज्ञानं स्मारयन्नृपः भवद्भिः सदैव देवतार्चनावसरेऽभ्युपेतव्यमित्युपरोधयन्,—

४) भुञ्जीमहि वयं भैक्ष्यं जीर्णं वासो वसीमहि।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥[6]

इति सूरिभिरभिहिते नृपः—

५) एकं मित्रं भूपतिर्वा यतिर्वा
एका भार्या सुन्दरी वा दरी वा।
एकं शास्त्रं वेदमध्यात्मकं वा
एको देवः केशवो वा जिनो वा[7] ॥

इति महाकविप्रणीतत्वात्परलोकसमारचनाय भवद्भिः सह मैत्र्यमभिलषामीति व्याहरन्, अथाप्रतिषिद्धमनुमतमिति तस्य महर्षेः परी-

१ पइहोइय c D २ काजकरे वा मणुसह c ३ मागत आथि. a ४ वचस्तत्त्वं c ५ विमृशतः P ६ प्रभावकचरिते श्रीहेमचन्द्रसुरिप्रबन्धे पद्य (३२२) मिदम् भर्तृहरिशतके प्रकीर्णे (श्लो.४) पाठांतरं यथाः—

अश्नीमहि वयं भिक्षामाशावासो वसीमहि (अन्यत्समानं)

७ भर्तृहरिशतके केशवो वा शिवो वा इति पाठान्तरेण वर्तते पद्यमिदम् (प्रकीर्ण.) एकं मित्रमिति प्रथममेव पदं b M H c D पुस्तकेषु। द्वितीयं पदं a L पुस्तकयोः एका भार्या वंशजाता प्रिया वा इत्येवम् तृतीयपदे वेदस्थाने वैद्य K आदर्शे.

क्षितचित्तवृत्तिः श्रीमुखेन स नृपः स्खलनाकारिणां वेत्रिणां सर्वसमर्पकं ददौ ।

१० अथ तत्र गतायाते संजायमाने सूरेर्गुणग्रामस्तवं कुर्वत्युर्वीपतौ पुरोधा विरोधादामिगः प्राह--

६) *विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशिन-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥

इति तद्वचनानन्तरं हेमचन्द्रः—

७)Tसिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतमेति किलैकवेलम् ।
पारावतः खरशिलाकणभोजनोऽपि
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥

तन्मुखमुद्राकारिणि प्रत्युत्तरेऽभिहिते सति, नृपप्रत्यक्षं केनापि मत्सरिणैते सिताम्बराः सूर्यमपि न मन्यन्ते[२] इत्यभिहिते ।

८) अधाम[३] धामधामं[४]कि वयमेव हृदि स्थितम्[५] ।
यस्यास्तव्यसने ज्ञाते त्यजामो भोजनं यतः ॥

इति प्रामाण्यनैपुण्याद्वयमेव सूर्यभक्ताः नैते इति तन्मुखबाधे[६] जाते । कदाचिद्देवतावसरक्षणे सौधमागते मोहान्धकारधिक्कारचन्द्रे श्रीहेमचन्द्रे यशश्चन्द्रगणिना रजोहरणेनासनपदं प्रमार्ज्य कम्बले तत्र निहिते, अज्ञात-

१ सर्वदायकं दूयकं H L २ भजन्ते C * पद्यमिदं प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे वर्तते ( १७६ ) T ... ... ... ... (१७९) भर्तृहरिशतके प्रकीर्णे ( श्लो. ४१ ) ३ आधाम L C ४ धामधामेदं H L ५ स्फुटं H ६ तत्त्वत इति तन्मुखबन्धे H L

तत्त्वतया किमेतदिति नृपेण पृष्टः प्राह। कदाचिदिह कोऽपि जन्तुर्भवति तदाबाधापरिहारायाऽसौ प्रयत्नः। यदा प्रत्यक्षतया जन्तुर्निरीक्ष्यते तदैवेदं युज्यते नापरथा वृथाप्रयासहेतुत्वादिति युक्तियुक्तां नृपोक्तिमाकर्ण्य तैः सूरिभिरभिदधे। गजतुरगाद्या चमूः किं प्रतिनृपतिरिपावुपस्थिते क्रियते उत पूर्वमेव, यथायं राजव्यवहारस्तथा धर्मव्यवहारोऽपीति तद्गुणरञ्जितहृदा पूर्वप्रतिपन्ने राज्ये दीयमाने सर्वशास्त्रविरोधहेतुत्वात् यदाह—

९) राजप्रतिग्रहदग्धानां ब्राह्मणानां युधिष्ठिर।
दग्धानामिव बीजानां पुनर्जन्म न विद्यते॥

इदं पुराणोक्तं। तथा च जैनागमः—

१०) सत्ति ही गिहिमत्ते यं रायपिण्डे किमिच्छएं।
इति तत्संबोधाच्चमत्कृतचित्तः श्रीपत्तनं प्राप॥

११ भूपोऽन्यदा मुनिं पप्रच्छ कयापि युक्त्याऽस्माकमपि यशःप्रसरः कल्पान्तस्थायी भवतीति तदीयां गिरं श्रुत्वा विक्रमार्क इव विश्वस्यानृण्यकरणात्, यद्वा सोमेश्वरस्य काष्ठमयं प्रासादं वारिधिशीकरनिकरैरासन्नाम्भैः शीर्णप्रायं युगान्तस्थायिकीर्तये समुद्धरेति चन्द्रातपनिभया श्रीहेमचन्द्रगिरोल्लसन्मुदम्भोधिर्नृपस्तमेव महर्षिं पितरं गुरुं दैवतं मन्यमानो विजानाति। निरन्तरं द्विजाननिन्दंस्ततः प्रासादोद्धाराय तदैव दैवज्ञनिवेदितसुलग्नस्तत्र पञ्चकुलं प्रस्थाप्य प्रासादप्रारम्भमचीकरत्।

१२ अन्यदा श्रीहेमचन्द्रस्य लोकोत्तरैर्गुणैः परिहृतहृदयो नृपो मन्त्रिश्रीउदयनमिति पप्रच्छ। एतादृशं पुरुषरत्नं समस्तवंशावतंसं देशे च समस्तगुणाकरे नगरे च कस्मिन्समुत्पन्नमिति नृपादेशादनु स मन्त्री

१ सन्निगिहिमित्तेय A b L २ इदं दशवैकालिकसूत्रस्थं वचनम् ३ अन्त C H
३ समस्तवंशावतंसे वंशे देशे च समस्तपुण्यप्रवेशे निःशेषगुणाकरे नगरे च a K

जन्मप्रभृति तच्चरित्रं पवित्रमित्थमाह । अर्धाष्टमनामनि देशे धुन्धुक-नगरे श्रीमन्मोढवंशे चाचिगनामा व्यवहारी, सतीजनमतल्लिका जिनशासनदेवीव तत्सधर्मचारिणी शरीरिणीव श्रीः पाहिणीनाम्नी चांमुण्डागोनश्रयो-राद्याक्षरेणाङ्कितनामा, तयोः पुत्रश्चाङ्गदेवोऽभूत् । स चाष्टवर्षदेश्यः श्रीदेवचन्द्राचार्येषु श्रीपत्तनात्तीर्थयात्राप्रस्थितेषु धुन्धुके श्रीमोढवसहिकायां देवनमस्करणाय प्राप्तेषु सिंहासनस्थिततदीयनिषद्याया उपरि सवयोभिः समं रममाणः शिशुभिः सहसा निषसाद । तदङ्गप्रत्यङ्गानां जगद्विलक्षणानि लक्षणानि प्रेक्ष्य, अयं यदि क्षत्रियकुले जातस्तदा सार्वभौमचक्रवर्ती, यदि वणिक्विप्रकुले जातस्तदा महामात्यश्चेद्दर्शनं प्रतिपद्यते तदा युगप्रधान इव कलिकालेऽपि कृतयुगमवतारयति स आचार्य इति विचार्य तन्नगरव्यवहारिभिः समं तल्लिप्सया चाचिगौकः प्राप्य तस्मिंश्चाचिगे ग्रामान्तरभाजि तत्पत्न्या विवेकिन्या स्वागतादिभिः परितोषिताः श्रीमन्तस्त्वत्[२]पुत्रं याचितुमिहागता[३] इति व्याहरन्तोऽथ सा हर्षाश्रूणि मुञ्चती स्वं रत्नगर्भं मन्यमाना श्रीसंघस्तीर्थकृतां मान्यः स मत्सूनुं याचते इति हर्षास्पदेऽपि विषादः, एतस्य पिता नितान्तमिथ्यादृष्टिः । अपरं तादृशोऽपि सम्प्रति ग्रामे नास्ति । अथ तैर्व्यवहारिभिस्त्वया दीयतामित्युक्ते स्वदोषोच्चारणाय मात्रा दाक्षिण्यादमात्रगुणपात्रं पुत्रस्तेभ्यो गुरुभ्यो ददे । तदनन्तरं तया श्रीदेवचन्द्रसूरिरिति तदीयमभिधानमबोधि । तैर्गुरुभिः स शिशुः शिष्यो भविष्यसीति पृष्टः, ओमित्युच्चरन् प्रतिनिवृत्तैस्तैः समं कर्णावत्यामाजगाम । उदयनमन्त्रिगृहे तत्सुतैः समं बालधारकैः पाल्यमानो यावदास्ते तावता ग्रामान्तरादागतश्चाचिगस्तं वृत्तान्तं परिज्ञाय पुत्रदर्शनावधिसंन्यस्तसमस्ताहारस्तेषां गुरूणां नाम मत्वा कर्णावतीं प्राप । तद्वसतौ समागत्य कुपितः पितेषत्तान्प्रणनाम । गुरुभिः सुतानुसारेणोपलक्ष्य विचक्षणतया विविधाभिरावर्जनाभिराव-

१ चामुण्डानामगोत्रजायाः K M २ श्रीसंघः C D K ३ आगतः K

र्जितः, तत्रानीतेनोदयनमन्त्रिणा धर्मबन्धुबुद्ध्या निजमन्दिरे नीत्वा ज्यायःसहोदरभक्त्या भोजयांचक्रे । तदनु चाङ्गदेवसुतं तदुत्सङ्गे निवेश्य पञ्चाङ्गप्रसादसहितं दुकूलत्रयं प्रत्यक्षं लक्षत्रयं चोपनीय सभक्तिकमावार्जितः । तं प्रति चाचिगः प्राह । क्षत्रियस्य मूल्ये अशीत्यधिकसहस्रं, तुरगस्य मूल्ये पञ्चाशदधिकानि सप्तदशशतानि अकिञ्चित्करस्यापि वणिजो मूल्ये नवनवतिकलभाः एतावता नवनवतिलक्षाः । त्वं तु लक्षत्रयं समर्पयन्नौदार्यछद्मना कार्पण्यं प्रादुःकुरुषे । मत्सुतस्तावदनर्घ्यो भवदीया च भक्तिरनर्घ्यतमा तस्य मूल्ये सा भक्तिरस्तु शिवनिर्माल्यमिवास्पृश्यो मे द्रव्यसंचयः । इत्थं चाचिगे सुतस्य स्वरूपमभिदधाने प्रमोदपूरितचित्तः स मन्त्री अकुण्ठोत्कण्ठतया तं परिरभ्य साधु साध्विति वदन् श्रीमानुदयनः प्राह । मम पुत्रतया समर्पितो योगिमर्कट इव सर्वेषां जनानां नमस्कारं कुर्वन् केवलमपमानपात्रं भविता, गुरूणां दत्तस्तु गुरुपदं प्राप्य बालेन्दुरिव त्रिभुवननमस्करणीयो जायतेऽतो यथोचितं विचार्य व्याहरेत्यादिष्टः स भवद्विचार एव प्रमाणमिति वदन् गुरुपार्श्वे नीतः सुतं गुरुभ्योऽदीदपत् । तदनु सुतस्य प्रव्रज्याकरणोत्सवश्चाचिगेन चक्रे । अथ कुम्भयोनिरिवाप्रतिमप्रतिभाभिरामतया समस्तवाङ्मयाम्भोधिमुष्टिंधयोऽभ्यस्तसमस्तविद्यास्थानो हेमचन्द्र इति गुरुदत्तनाम्ना प्रतीतः । सकलसिद्धान्तोपनिषन्निषण्णधीः षट्त्रिंशता सूरिगुणैरलङ्कृततनुर्गुरुभिः सूरिपदेऽभिषिक्तः । इति मन्त्रिणोदयनेनोदितां हेमाचार्यजन्मप्रवृत्तिमाकर्ण्य नृपो मुमुदेतरां ।

१३ अथ श्रीसोमनाथदेवस्य प्रासादारम्भे खरशिलानिवेशे संजाते सति पञ्चकुलप्रहितवर्धापनिकाविज्ञप्तिकां नृपः श्रीहेमचन्द्रस्य गुरोर्दर्शयन्, अयं प्रासादप्रारम्भः कथं निष्प्रत्यूहं प्रमाणभूमिमाधिरोढेति पृथ्वी-

१ शिखरशिलानिवेशे P

परिवृढेनानुयुक्तः श्रीमान्किञ्चिदुचितं विचिन्त्य गुरुरूचिवान् । यदस्य धर्मकार्यस्यान्तरायपरिहाराय ध्वजारोपं यावदजिह्मब्रह्मसेवा, अथवा मद्यमांसनियमो द्वयोरेकतरं किमप्यङ्गीकरोतु नृप इत्यभिहिते तद्वचनमाकर्ण्य मद्यमांसनियममभिलषन्, श्रीनीलकण्ठोपरि विमुच्योदकं तं चाभिग्रहं जग्राह । संवत्सरद्वयेन तस्मिन्प्रासादे कलशध्वजाधिरोपं यावन्निवृत्ते तं नियमं मुमुक्षुर्गुरूननुज्ञापयंस्तैरूचे । यद्यनेन निजकीर्तनेन सार्धमर्धचन्द्रचूडं प्रेक्षितुमर्हसि, तद्यात्रापर्यन्ते नियममोचनावसर इत्यभिधायोत्थिते श्रीहेमचन्द्रमुनीन्द्रे षट्त्रिंशद्गुणैरुन्मीलन्नीलीरागरक्तहृदयस्तमेकमेव संसदि प्रशशंस सः । निर्निमित्तवैरीपरिजनस्तत्तेजःपुञ्जमसहिष्णुः—

११) उज्ज्वलगुणमभ्युदितं क्षुद्रो द्रष्टुं न कथमपि क्षमते ।
दग्ध्वा तनुमपि शलभो दीप्तं दीपार्चिषं हरति ॥

इति न्यायात्पृष्टिमांसादनदोषमप्यङ्गीकृत्य तदपवादानवादीत् । यदयममन्दछन्दानुवृत्तिपरः सेवाधर्मकुशलः केवलं प्रभोरभिमतमेव भाषते यद्येवं न तदा प्रातरुपेतः श्रीसोमेश्वरयात्रार्थमत्यर्थमभ्यर्थ्येत । राज्ञा तथाकृते सूरयः प्रोचुः । यद्बुभुक्षितस्य किं निमन्त्रणाग्रह, उत्कण्ठितस्य किं केकारवश्रावणमिति लोकरूढेस्तपस्विनामधिकृततीर्थाधिकाराणां को नाम नृपतेरत्र निर्बन्धः । इत्थं गुरोरङ्गीकारे किं भवद्योग्यं सुखासनप्रभृति वाहनादि च लभ्यतामितीरिते वयं चरणचारेणैव सञ्चरन्तः पुण्यमुपालभामहे परं वयमिदानीमापृच्छ्य मितैर्मितैः प्रयाणकैः श्रीशत्रुंजयोज्जयन्तादिमहातीर्थानि नमस्कृत्य भवतां श्रीपत्तनप्रवेशे मिलिष्याम इत्युदीर्य तत्तथैव कृतवन्तः ।

---

१ सुभाषितार्णवेऽपि दृश्यते पद्यमिदं २ श्रीसोमेश्वरयात्रायां भवान्सहागच्छतु इति गदितः स परतीर्थपरिहारान्न तत्रागमिष्यतीति अस्मन्मतमेवं प्रमाणं नृपस्तद्वाक्यमाकर्ण्य प्रातरुपागतं श्रीहेमचन्द्राचार्यं H M

१४ नृपतेः समग्रसामग्र्या कतिपयैः प्रयाणकैः श्रीपत्तनं प्राप्तस्य श्रीहेमचन्द्रमुनीन्द्रमिलनादतिप्रमुदितस्य सन्मुखागतेन गण्ड० श्रीबृहस्पतिनानुगम्यमानस्य महोत्सवेन पुरं प्रविश्य श्रीसोमेश्वरप्रासादसोपानेष्वाक्रान्तेषु भूपीठलुण्ठनादरादनन्तरं चिरतरातुल्यायल्लकानुमानेन गाढमुपगूढसोमेश्वरलिङ्गस्य, एते जिनादपरं न नमस्कुर्वन्तीति मिथ्यादृग्वचसा भ्रान्तचित्तस्य श्रीहेमचन्द्रं प्रति एवं विधा गीराविरासीत् । यदि युज्यते तदेतैरुपहारैर्मनोहारिभिः श्रीसोमेश्वरमर्चयन्तु भवन्तः । तत्तथेति प्रतिपद्य क्षितिपकोशादागतेन कमनीयेनोद्भमनीयेनालङ्कृततनुर्नृपतिनिर्देशाच्छ्रीबृहस्पतिना दत्तहस्तावलम्बः प्रासाददेहलीमधिरुह्य किञ्चिद्विचिन्त्य प्रकाशं । अस्मिन्प्रासादे कैलासनिवासी महादेवः साक्षादस्तीति रोमाञ्चकञ्चुकितां तनुं बिभ्राणो द्विगुणीक्रियतामुपहार इत्यादिश्य शिवपुराणोक्तदीक्षाविधिनाह्वाननावगुण्ठनमुद्रामन्त्रन्यासविसर्जनोपचारादिभिः पञ्चोपचारविधिभिः शिवमभ्यर्च्य तदन्ते—

११) *यत्र तत्र समये यथा तथा
योऽसि सोऽस्यभिधया यया तया ।
वीतदोषकलुषः स चेद्भवा-
न्नेक एव भगवन्नमोऽस्तु ते ॥ १ ॥

१२) भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा महेश्वरो वा नमस्तस्मै ॥ २ ॥

इत्यादिस्तुतिभिः सकलराजलोकान्विते राज्ञि सविस्मयमवलोकमाने दण्डप्रणामपूर्वं स्तुत्वा श्रीहेमाचार्ये उपरते सति, स नृपः श्रीबृहस्पतिना ज्ञापितपूजाविधिः समधिकवासनया शिवार्चानन्तरं धर्मशिलायां तुला-

---

१ मुपगूढे सोमेश्वरलिङ्गे H मुपगढसोमेश्वरलिङ्गे a L २ तवैतै P
* प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे ( ३४७ ) पद्यमिदम्

पुरुषगजदानादीनि महादानानि दत्वा कर्पूरारात्रिकमुत्तार्य समग्रं राजवर्गमपसार्य तद्गर्भगृहान्तः प्रविश्य न महादेवसमो देवः, न मम तुल्यो नृपतिः, न भवत्सदृशो महर्षिरिति भाग्यवैभववशादत्र सिद्धे[1] त्रिकसंयोगे बहुदर्शनप्रमाणप्रतिष्ठासंदिग्धे देवतत्त्वे मुक्तिप्रदं दैवतमस्मिंस्तीर्थे तथ्यगिरा निवेदयेत्यभिहितः श्रीहेमाचार्यः किञ्चिद्धिया निध्याय नृपं प्राह । अलं पुराणदर्शनोक्तिभिः श्रीसोमेश्वरमेव तव प्रत्यक्षीकरोमि, यथा तन्मुखेन मुक्तिमार्गमवैषीति तद्वाक्यात्किमेतदपि[2] जाघटीतीति विस्मयापन्नमानसे नृपे निश्चितमत्र तिरोहितमस्त्येव दैवतमावां गूरूक्तयुक्त्या निश्चलावाराधकौ तदित्थं द्वन्द्वसिद्धौ सुकरं दैवतप्रादुःकरणं, मया प्रणिधानं क्रियते, भवता कृष्णागुरूत्क्षेपश्च कार्यस्तदा स परिहार्यो यदा त्र्यक्षः प्रत्यक्षीभूय निषेधयति । अथोभाभ्यामपि तथा क्रियमाणे धूपधूमान्धकारिते गर्भगृहे निर्वाणेषु नक्षत्रमालादीपकेषु आकस्मिके प्रकाशे द्वादशात्ममहसीव प्रसरति, नृपो नयने सम्भ्रमादुन्मृज्य यावदालोकते तावज्जलाधारोपरि जात्यजाम्बूनदद्युतिं चर्मचक्षुषां दुरालोकमप्रतिमरूपमसम्भाव्यस्वरूपं तपस्विनमद्राक्षीत् । तं पदाङ्गुष्ठात्प्रभृति जटावधि करतलेन संस्पृश्य निश्चितदेवतावतारः पचाङ्गचुम्बितावनितलं प्राणिपत्य भक्त्या भूमानिति विज्ञपयामास । जगदीश भवद्दर्शनात्कृतार्थे दृशौ आदेशप्रसादात्कृतार्थय श्रवणयुगलमिति विज्ञप्य तूष्णीं स्थिते मोहनिशादिनमुखात्तन्मुखादिति दिव्या गीराविरासीत् । राजन्नयं महर्षिः सर्वदेवतावतारः । अजिह्मपरब्रह्मावलोकः करतलकलितमुक्ताफलवत्कालत्रयविज्ञातस्वरूपः । एतदुपदिष्टएवासंदिग्धो मुक्तिमार्ग इत्यादिश्य तिरोभूते भूतपतावुन्मनीभावं भजति[3] भूपतौ, रेचितप्राणायामपवनः श्लथीकृतासनबन्धः श्रीहेमचन्द्रो यावद्राजन्निति[4] वाचमुवाच । तावदिष्टदैवतसङ्केतात्त्यक्तराज्याभिमानो जीव पादाववधार्यता-[5]

१ अयत्नसिद्धे a H L २ मेतदिति a P L ३ भजन् भूपतिः H a L ४ याजनमिति a P ५ जीवप आदाववधार्यतामिति P

मिति व्याहृतिपरो[1] विनयनम्रमौलिर्यत्कृत्यमादिशेति व्याजहार। अथ तत्रैव नृपतेर्यावज्जीवं पिशितप्रसन्नानियमं दत्वा ततः प्रत्यावृत्तौ गुरुक्ष्मापती श्रीमदणहिल्लपुरं प्रापतुः।

१९ श्रीजिनवदननिर्गमपावनीभिः शुद्धसिद्धान्तगीर्भिः प्रतिबुद्धो नृपः परमार्हतबिरुदं भेजे। तदभ्यर्थितः प्रभुः त्रिषष्टिशलाकापुरुषचरितं विंशतिवीतरागस्तुतिभिरुपेतं पवित्रं योगशास्त्रं च रचयांचकार। प्रभोरादेशाच्चाज्ञाकारिष्वष्टादशदेशेषु चतुर्दशवत्सरप्रमितां सर्वभूतेषु मारिं निवारितवान्। तेषु तेषु च देशेषु चत्वारिंशदधिकानि चतुर्दशशतानि विहाराणां कारयामास। सम्यक्त्वमूलानि द्वादशव्रतान्यङ्गीकुर्वन्नदत्तादानपरिहाररूपे तृतीयव्रते व्याख्यायमाने रुदतीवित्तदोषान् पापैकनिबन्धनान् ज्ञापितो नृपस्तदधिकृतं पञ्चकुलमाकार्य द्वासप्ततिलक्षप्रमाणं तदीयपट्टकं विपाट्य मुमोच। तस्मिन्मुक्ते—

१३) *न यन्मुक्तं पूर्वैं रघुनहुषनाभागभरत—
प्रभृत्युर्वीनाथैः कृतयुगकृतोत्पत्तिभिरपि।
विमुञ्चन्कारुण्यात्तदपि रुदतीवित्तमधुना
कुमारक्ष्मापाल त्वमसि महतां मस्तकमणिः॥

इति विद्वद्भिः स्तूयमाने—

१४) अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः।
त्वं तु संतोषतो मुञ्चन्सत्यं राजपितामहः॥

इति प्रभुरपि नृपतिमनुमोदयांचक्रे॥

१६ अथ सुराष्ट्रदेशीयं सुवेर[2]नामानं विग्रहीतुं श्रीमदुदयनमन्त्रिणं दलनायकीकृत्य समस्तकटकबन्धेन समं प्रस्थापयामास। सोऽपि श्रीवर्धमानपुरं प्राप्य श्रीयुगादिदेवपादान्निनंसुः पुरः प्रयाणकाय समस्तमण्डलेश्वरान्नभ्यर्थ्य[3] स्वयं विमल[4]गिरिमागतः विशुद्धश्रद्धया श्रीदेवपादानां

---

१ व्याहृतिपरे गुरौ P * प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे पद्य (६९७) मिदम्। २ संउसर A C D M ३ मभ्यर्च्य P ४ शत्रुंजयं

पूजादि विधाय यावत्पुरतो विधिवच्चैत्यवन्दनां विधत्ते तावन्नक्षत्रमालाया दीपवर्त्तिं देदीप्ययानामादाय मूषकः काष्ठमयप्रासादबिले प्रविशन्देवाङ्गरक्षैस्त्याजितस्तदनु स मन्त्री समाधिभङ्गात्काष्ठमयदेवप्रासादविध्वंसभयाज्जीर्णोद्धारं चिकीर्षुः श्रीदेवपादानां पुरत एकभक्तादीनभिग्रहान् जग्राह। तदनु कृतप्रयाणः स्कन्धावारमुपेत्य तेन प्रत्यर्थिना समं समरे जायमाने परैः पराजिते नृपबले श्रीमदुदयनः समुत्तस्थौ। तदा तत्प्रहारजर्जरितदेह आवासं नीतः[1] सकरुणं क्रन्दन् स्वजनैस्तत्कारणं पृष्टः सन्निहिते मृत्यौ श्रीशत्रुंजयशकुनिकाविहारयोर्जीर्णोद्धारवाञ्छया देवऋणं पृष्टिलग्नं मन्त्री प्राह। अथ तैर्भवन्नन्दनौ वाग्भटाम्रभटनामानौ गृहीताभिग्रहौ तीर्थद्वयमुद्धरिष्यत इत्यर्थे वयं प्रतिभुवः इति तदङ्गीकारात्पुलकिताङ्गः धन्यंमन्यः अन्त्याराधनकृते स मन्त्री कमपि चारित्रिणमन्वेषयामास। तस्मिन्ननुपलभ्यमाने कमपि वण्ठं तद्वेषमानीय निवेदिते मन्त्री तदङ्घ्री ललाटे परिस्पृशन् तत्समक्षं दशधाराधनां विधाय श्रीमानुदयनः परलोकं प्राप। वण्ठस्तु चन्दनतरोरिव तद्वासनापरिमिलेन क्षुद्रद्रुमवद्वासितोऽनशनप्रतिपत्तिपूर्वकं रैवतके जीवितान्तं चकार।

१७ अथाणहिल्लपुरं प्राप्तैस्तैः स्वजनैस्तं वृत्तान्तं ज्ञापितौ वाग्भटाम्रभटौ तानेवाभिग्रहानगृहीत्वा जीर्णोद्धारमारेभाते। वर्षद्वयेन श्रीशत्रुंजये प्रासादे निष्पन्ने उपेत्यागतमानुषेण वर्धापनिकायां वाच्यमानायां पुनरागतेन द्वितीयपुरुषेण प्रासादः स्फुटित इत्यूचे। ततस्तसत्रपुप्रायां गिरं निशम्य श्रीकुमारपालभूपालमापृच्छ्यमहं० कपर्दिनि[2] श्रीकिरणमुद्रां नियोज्य तुरङ्गमाणां चतुर्भिः सहस्रैः सह श्रीशत्रुंजयोपत्यकां प्राप्य स्वनाम्ना वाग्भटपुरनगरं[3] निवेशयामास। सभ्रमप्रासादे पवनः

१ नीते P २ कपर्दिने C ३ बाहड L a

प्रविष्टो न निर्यातीति स्फुटनहेतुं शिल्पिभिर्निर्णीयोक्तं, भ्रमहीने च प्रासादे निरन्वयंतां[1] विमृश्याऽन्वयाभावे धर्मसंतानमेवास्तु पूर्वोद्धारकारिणां श्रीभरतादीनां पङ्क्तौ नामास्तु, इति तेन मन्त्रिणा दीर्घदर्शिन्या बुद्ध्या विभाव्य भ्रमभित्त्योरन्तरालं शिलाभिर्निचितं विधाय वर्षत्रयेण निष्पन्ने प्रासादे कलशदण्डप्रतिष्ठायां श्रीपत्तनसंघं निमन्त्रणापूर्वमिहानीय महता महेन [2]सं० १२११ वर्षे ध्वजारोपं मन्त्री कारयामास। स शैलमयबिम्बं[3] मम्माणीयखनीसक्तपरिकरमानीय निवेशितवान्। श्रीवाग्भटपुरे नृपतिपितुर्नाम्ना त्रिभुवनपालविहारे श्रीपार्श्वनाथं स्थापितवान्। तीर्थपूजाकृते च चतुर्विंशत्यारामान्नगरे परितो वप्रं देवलोकस्य ग्रासवासादि[4] दत्वा चैतत्सर्वं कारयामास। अस्य तीर्थोद्धारस्य व्यये—

१५) षष्टिर्लक्षयुता[5] कोटी व्ययिता यत्र मन्दिरे।
स श्रीवाग्भटदेवोऽत्र वर्ण्यते विबुधैः कथम्॥[6]

इति श्रीशत्रुंजयोद्धारप्रबन्धः[8]॥

१८ अथ विश्वैकसुभटेन श्रीआम्रकभटेन पितुः श्रेयसे भृगुपुरे श्रीशकुनिकाविहारप्रासादप्रारम्भे खन्यमाने गर्तापूरे नर्मदासान्निध्यादकस्मान्मिलितायां भूमौ बाधितेषु[7] कर्मकरेषु कृपापरवशतयात्मानमेवामन्दं निन्दन्सकलत्रपुत्रस्तत्र झम्पामदात्। तत्साहसातिशयाच्चास्मिन्प्रत्यूहे निराकृते। शिलान्यासपूर्वं समस्तप्रासादे निष्पन्ने कलशदण्डप्रतिष्ठावसरे नगरसंघान्निमन्त्रणपूर्वं तत्रानीय यथोचितमशनवस्त्राभरणादिसन्मानैः सन्मान्य सामन्तेषु यथागतं प्रहितेषु, आसन्ने लग्ने संजायमाने

१ निरवयतां P २ सं० ११६५ A b ३ बिम्बस्य a P H L ४ श्री वासादि C H ५ सप्तषष्टि a ६ वर्षैरुद्रार्कसंख्यैः स्वजनकवचसा विक्रमार्कात्प्रयातैर्यातैनाः सिद्धशैले जिनपतिभुवनं वाग्भटः प्रोद्दधार॥ ( इति चा. कु. च. स. ७ ) ७ छादितेषु C H L ८ प्रसंगोऽयं चारित्रसुंदर गणिकृतकुमारपालचरिते सप्तमसर्गे सविस्तरं वर्णितः।

भट्टारकश्रीहेमचन्द्रसूरिपुरस्सरं स नृपतिं श्रीमदणहिल्लपुरसंघं तत्रानीयातुच्छवात्सल्यादिभिर्भूषणादिदानैः सन्तर्प्य ध्वजाधिरोपाय सञ्चरन्नऽर्थिभिः स्वयं स्वं मन्दिरं मुषितं कारयित्वा श्रीसुव्रतप्रासादे ध्वजं महाध्वजोपेतमध्यारोप्य हर्षोत्कर्षात्तत्रानालस्यं लास्यं विधाय तदन्ते भूपतिनाभ्यर्थित आरात्रिकं गृह्णन् तुरङ्गं द्वारभट्टाय दत्वा राज्ञा स्वयं कृततिलकावसरे द्वासप्तत्या सामन्तैश्चामरपुष्पवर्षादिभिः कृतसाहाय्यस्तदाभ्यागताय बन्दिने कृतकङ्कणवितरणो बाहुभ्यां धृत्वा बलात्कारेण नृपेणावतार्यमाणारात्रिकमङ्गलप्रदीपः श्रीसुव्रतस्य च गुरोश्चरणौ प्रणम्य साधर्मिकवन्दनापूर्वं नृपतिं सत्वरारात्रिकहेतुं[1] पप्रच्छ। यथा द्यूतकारो द्यूतरसातिरेकाच्छिरःप्रभृतीन् पदार्थान् पणीकुरुते तथा भवानप्यतः परमर्थितस्त्यागरसातिरेकाच्छिरोऽपि[2] तेभ्यो ददासीति नृपेणादिष्टे, भवल्लोकोत्तरचरित्रेणापहृतहृदया विस्मृताजन्ममनुष्यस्तुतिनियमाः श्रीहेमाचार्याः—

१६) *किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः ।
कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥

इत्थमाम्रभटमनुमोद्य गुरुक्षमापती यथागतं जग्मतुः ॥

१९ अथ तत्रागतानां प्रभूणां श्रीमदाम्रभटस्याकस्मिकदेवीदोषात्पर्यन्तदशामागतस्यापृच्छनविज्ञप्तिकायामुपागतायां सत्यां तत्कालमेव तस्य महात्मनः प्रासादशिखरे नृत्यतो मिथ्यादृशां देवीनां दोषः संजात इत्यवधार्य प्रदोषकाले यशश्चन्द्रतपोधनेन समं खेचरगत्योत्पत्य निमेषमात्रादलङ्कृतभृगुपुरपरिसरभुवः प्रभवः सैन्धवीमनुनेतुं कृतकायोत्सर्गास्तया जिह्वाकर्षणादवगणनास्पदं दीयमानौ[3] उदूखले[4]

---

१ स त्वारात्रिक P २ अर्थिप्रत्यर्थितत्याग C * पद्यमिदं प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे ( ७६१ ) ३ नीयमाना H ४ उलूखले C

शालितन्दुलान्प्रक्षिप्य यशश्चन्द्रगणिना प्रदीयमानेषु मुशलप्रहारेषु प्राक्प्रासादकम्पो, द्वितीये प्रहारे देवीमूर्तिरेव स्वस्थानादुपेत्य वज्रपाणिप्रहारेभ्यो रक्ष रक्षेत्युच्चरन्ती प्रभोश्चरणयोर्निपपात। इत्थमनवद्यविद्याबलात्तन्मूलानां मिथ्यादृग्व्यन्तरीणां दोषं निगृह्य श्रीसुव्रतप्रासादमाजग्मुः।

१७) संसारार्णवसेतवः शिवपथप्रस्थानदीपाङ्कुरा
विश्वालम्बनयष्टयः परमतव्यामोहकेतूद्गमाः।
किं वास्माकमनोमतङ्गजदृढालानैकलीलाजुष–
स्त्रायन्तां नखरश्मयश्चरणयोः श्रीसुव्रतस्वामिनः ॥

इति स्तुतिभिः श्रीमुनिसुव्रतमुपास्य श्रीमदाम्रभटमुल्लाघस्नानेन पट्टकृत्यं यथागतमागुः। श्रीमदुदयनचैत्ये शकुनिकाविहारे घटीगृहे राज्ञः कौङ्कणनृपतेः कलशत्रयं स्थानत्रये न्यास्थत्। * **इति श्रीराजपितामहाम्रभटप्रबन्धः ॥**

२० अथान्यस्मिन्नवसरे कुमारपालनामा नृपः पाण्डित्यलिप्सया कपर्दिमन्त्रिणोऽनुमतेन भोजनानन्तरं क्षणं केनापि विदुषा वाच्यमाने कामन्दकीयनीतिशास्त्रे—

१७) पर्जन्य इव भूतानामाधारः पृथिवीपतिः।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥

वाक्यमिदमाकर्ण्य नृपतेर्मेघ औपम्या इति कुमारपालेनाभिहिते सर्वेष्वपि सामाजिकेषु न्युञ्छनानि कुर्वाणेषु तदा कपर्दिमन्त्रिणमवाङ्मुखं वीक्ष्य, एकान्ते नृपपृष्ठ एवमवादीत्। औपम्याशब्दे स्वामिना स्वयमुच्चरिते सर्वव्याकरणेष्वेतत्प्रयोगापेतेषु छन्दोनुवर्तिभिर्न्युञ्छनानि क्रिय-

---

१ उल्लाप्य नीरोगं कृत्वा c २ एवं शकुनिकाविहारोद्धारे कोटिद्वयं व्ययितम् a
* प्रबन्धोयं जिनप्रभसूरिकृततीर्थकल्पे तथा च प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धेऽपि वर्तते २ का. नी. सर्ग १ श्लो. १३ हितोपदेशे शार्ङ्गधरपद्धत्यां (१२८३) चापि दृश्यते ४ अपप्रयोगे A c D

माणे मम द्वेधाऽवाङ्मुखत्वमुचितं। तथा वरमराजकं विश्वं न तु मूर्खो राजेति प्रतीपभूपालमण्डलेष्वपकीर्तिः प्रसरति । अतोऽस्मिन्नर्थे उपमेयं औपम्यं उपमेत्याद्याः शब्दाः शुद्धाः । तद्वचनानन्तरं राज्ञा शब्दव्युत्पत्तिहेतवे पञ्चाशद्वर्षदेश्येन कस्याप्युपाध्यायस्य समीपे मातृकापाठात्प्रभृति शास्त्राण्यारभ्यैकेन वर्षेण वृत्तिकाव्यत्रयमधीतं विचारचतुर्मुखबिरुदमर्जितम् ॥* इति विचारचतुर्मुखश्रीकुमारपालाध्ययनप्रबन्धः ।

**२१** कस्मिन्नप्यवसरे विश्वेश्वरनामा कविर्वाराणस्याः श्रीपत्तनमुपागतः श्रीहेमसूरीणां संसदि प्राप्तः। तत्र कुमारपालनृपतौ विद्यमाने सः—

१८) *पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन् ।
इति भणित्वा विलम्बमानो नृपेण सक्रोधं निरैक्ष्यत ।
षड्दर्शनपशुग्रामं चारयन् जैनगोचरे ॥

इत्युत्तरार्धपरितोषितसमाजलोकः श्रीरामचन्द्रादीनां समस्यां समर्पयामास ।

१९) व्याषिद्धा नयने मुखं च रुदती स्वे गर्हिते कन्यका
नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ ।
सर्वत्रापि च लक्ष्यते मुखशशिज्योत्स्नावितानैरियमित्थं मध्यगता सखीभिरभितो दृग्मीलनाकेलिषु ॥

व्याषिद्धा इति श्रीकपर्दिना महामात्येन पूरितायां समस्यायां पश्चात्कविः पञ्चाशत्सहस्रमूल्यं निजं ग्रैवेयकं श्रीकपर्दिनः कण्ठे श्रीभारत्याः पदमित्युच्चरन्निवेशयामास। अथ तद्वैदग्ध्यचमत्कृतेन नृपतिना स्वसन्निधौ स्थाप्यमानः ।

---

१ वृत्तिकाव्यानां Bh C * प्रबन्धोऽयं कुमारपालचरितेऽपि वर्तते
२ कथमिति चेज्जिनमण्डनसूरिकृतकुमारपालचरित्रं द्रष्टव्यम्
* पद्यमिदं प्रभावकचरिते श्रीहेमचंद्रसूरिप्रबन्धे ( ३०४ )
३ निरीक्षितः b ४ गोपुरे C ५ इदं चतुर्थं चरणं दृश्यते C D आदर्शयोः।

२०) कथाशेषः कर्णोऽजनि जनकृशा काशिनगरी
सहर्षं हेषन्ते हरिहरिति हम्मीरहरयः।
सरस्वत्याश्लेषप्रवणलवणोदप्रणयिनि
प्रभासस्य क्षेत्रे मम हृदयमुत्कण्ठितमदः॥

इत्युक्त्वापृछ्यमानो नृपसत्कृतः स यथास्थानमगात्।

२२ कदाचिदेव श्रीकुमारपालविहारे नृपाहूताः प्रभवः श्रीकपर्दिना दत्तहस्तावलम्बा यावत्सोपानमारोहन्ति तावन्नर्तक्याः कञ्चुके गुणमाकृष्यमाणं विलोक्य श्रीकपर्दी—

२१) सोहग्गीउ सहि कञ्चुयउ जुत्त उत्ताणु करेइ।

एवमुक्त्वा यावद्विलम्बते।

पुट्ठिहिं पच्छइ तरुणीयणु जसु गुणगहणु करेइ॥

इति श्रीप्रभुपादैरुत्तरार्धमपूरि॥

२३ कदाचित्प्रत्यूषे कपर्दिमन्त्री प्रणामानन्तरं हस्ते किमेतदिति पृष्टः स प्राकृतभाषया हरडइ इति विज्ञपयामास। प्रभुभिरुक्तं किमद्यापि ? आहतप्रतिभतया, तद्वचनच्छलमाकलय्य कपर्दिनोक्तं, इदानीं न कुतोऽन्त्योऽप्याद्योऽभूत् मात्राधिकश्च। हर्षाश्रुपरिपूर्णदृशः प्रभवः श्रीरामचन्द्रप्रभृतिपण्डितानां पुरस्तात्तच्चातुरीं प्रशशंसुः। तैरज्ञाततत्त्वैः किमिति पृष्टो हरडइ इति शब्दच्छलेन हकारो रडइ। किमद्यापीत्यभिहितमात्रेण वचस्तत्त्वविदानेन नेदानीमुक्तं। यतः पुरा मातृकाशास्त्रे हकारः प्रान्ते पठ्यते अत एव ह रडइ साम्प्रतं त्वस्मन्नामनि प्रथमतया मात्राधिकश्च। **इति हरडइ प्रबन्धः।**

२४ कदाचित् केनापि पण्डितेनोर्वशीशब्दे शकारस्तालव्यो दन्त्यो वेति पृष्टे यावत्प्रभवः किञ्चित्समादिशन्ति तावत्, उरूंन् अश्नुते

१ उरूशेते a b H L M

उर्वशीति पत्रकं लिखित्वा श्रीकपर्दिना प्रभोरुत्सङ्गे मुक्तं । तत्प्रामाण्यात्तालव्यशकारनिर्णयस्तदग्रे प्रभुभिरभिहितः । इत्युर्वशीशब्दप्रबन्धः ।

२५ अथान्यदा सपादलक्षीयराज्ञः कश्चित्सान्धिविग्रहिकः श्रीकुमारपालनृपतेः सभायामुपेतो राज्ञा भवत्स्वामिनः कुशलमिति पृष्टः । स मिथ्याभिमानी पण्डितमानी च विश्वं लातीति विश्वलस्तस्य च को विजयसन्देहः । राज्ञा प्रेरितेन श्रीमता कपर्दिना मन्त्रिणा श्वलश्वल्ल आशुगतौ इति धातोर्विरिव श्वलति नश्यतीति विश्वलः । इत्येवं प्रधानेन तन्नामदूषणं विज्ञप्त इति स राजा विग्रहराज इति नाम[1] बभार । अपरस्मिन्वर्षे स एव प्रधानपुरुषः श्रीकुमारपालनृपतेः पुरो विग्रहराजनाम विज्ञपयन् मन्त्रिणा श्रीकपर्दिना विग्रो विगतनासिक एवं हराजौ रुद्रनारायणौ कृतौ, इति व्याख्यातं । तदित्यवगम्य तदनन्तरं स नृपः कपर्दिना नामखण्डनभीरुः कविबान्धव इति नाम बभार ॥

२६ अथान्यदा श्रीकुमारपालनृपपुरतः श्रीयोगशास्त्रव्याख्याने संजायमाने पञ्चदशकर्मादानेषु वाच्यमानेषु ।

दन्तकेशनखास्थित्वक्रोम्णां ग्रहणमाकरे ।

इति प्रभुकृते मूलपाठे पं० उदयचन्द्रः रोम्णो[2] ग्रहणमिति भूयो भूयो वाचयन् प्रभुभिर्लिपिभेदं पृष्टः स प्राणितूर्याङ्गानामिति व्याकरणसूत्रेण प्राण्यङ्गानां सिद्धमेकत्वमिति लक्षणविशेषं स विज्ञपयन् प्रभुभिः श्लाघितो राज्ञान्यैश्च[3] । इति पं० उदयचन्द्रप्रबन्धः ।

२७ अथ कदाचित्स राजर्षिर्घृतपूरभोजनं कुर्वन् किञ्चिद्विचिन्त्य कृतसर्वाहारपरिहारः[4] इति प्रभुं पप्रच्छ । यदस्माकं घृतपूराहारो युज्यते नवेति प्रभुभिरभिदधे । वणिग्ब्राह्मणयोर्युज्यते कृताभक्ष्यनियमस्य क्षत्रि-

१ विग्रहराज इति पण्डितमुखात्तन्नाम a b H २ रोम्णां ग्रहणं P
३ न्युंछनेन संभावितः H ४ पवित्रीभूय इति H

यस्य तु न, तेन पिशिताहारस्यानुस्मरणं भवतीत्थमेवेति पृथ्वीपतिरभिधाय पूर्वभक्षितस्याभक्ष्यस्य प्रायश्चित्तं याचितवान्। द्वात्रिंशद्दशनसंख्यया[1] द्वात्रिंशद्विहारान्कारयेति।

राज्ञा तथाकृते, प्रभुदत्ते लग्ने वटपद्रकान्निजप्रासादे मूलनायकप्रतिष्ठां कारयितुं श्रीपत्तनमुपेयुषि कान्हनाम्नि व्यवहारिणि तन्नगरमुख्ये प्रासादे तद्बिम्बं मुक्त्वा यावदुपहारान्गृहीत्वा स पुनरुपैति तावन्नृपतेरङ्गरक्षकैर्निरुद्धे द्वारि अन्तः प्रवेशमलभमानः कियति काले व्यतिक्रान्ते उत्थितैर्द्वारपालकैर्व्यतीते प्रतिष्ठाकाले[2] स तत्र प्रविश्य प्रभोः पादमूले लगित्वा सोपालम्भं रुरोद। प्रभुभिरन्यथा दुरपनेयं तस्य दुःखमिति विमृश्य रङ्गमण्डपाद्बहिर्भूत्वा नक्षत्रचारेण स्वं लग्नमुदितं व्योम्नि विलोक्य घटिकासम्बन्धेन[3] नैमित्तिकेन यस्मिँल्लग्ने बिम्बानि प्रतिष्ठापितानि तेषां वर्षत्रयमायुः सम्प्रतितने लग्ने तु प्रतिष्ठितमिदं चिरायुरिति प्रभुभिरादिष्टं। स तदैव प्रतिष्ठामकारयत्तत्प्रभूक्तं तथैव जज्ञे। इत्यभक्ष्यभक्षणप्रायश्चित्तप्रबन्धः।

२८ मयापहृते धने पुरा कश्चिन्मूषको मृतस्तत्प्रायश्चित्ते राज्ञा याचिते तच्छ्रेयसे प्रभुभिस्तन्नामाङ्कितो विहारः कारितः। तथा च कयापि व्यवहारिविधवाऽज्ञातज्ञातिनामग्रामसम्बन्धया पथि दिनत्रयं बुभुक्षितो नृपतिः शालिकरम्बेन सुहितीकृतस्तत्कृतज्ञतया तत्पुण्याभिवृद्धये करम्बविहारं श्रीपत्तनेऽकारयत्।

२९ तथा यूकाविहारश्चैवं। सपादलक्षदेशे कश्चिदविवेकी धनी केशसम्मार्जनावसरे प्रियार्पितां यूकां करतले संगृह्य पीडाकारिणीं तां तर्जयंश्चिरेण मृदित्वा व्यापादयामास। सन्निहितैनामारिकारिपञ्चकुलेन स श्रीमदणहिल्लपुरे समानीय नृपाय निवेदितः। तदनु प्रभूणामादेशा-

---

१ दन्तसंख्यया एकस्मिन्भिडबन्धे a b २ प्रतिष्ठोत्सवे a ३ कूटघटिका D

तद्दण्डपदे तस्य सर्वस्वेन तत्रैव यूकाविहारः कारितः । इति यूकाविहारप्रबन्धः ।

३० अथ स्तम्भतीर्थे सामान्ये सालिगवसहिकाप्रासादे यत्र प्रभूणां दीक्षाक्षणो बभूव रत्नमयबिम्बालङ्कृतस्तत्र निरुपमो जीर्णोद्धारः कारितः । इति प्रभुदीक्षावसहिकाया उद्धारप्रबन्धः ।

३१ अथ श्रीसोमेश्वरपत्तने कुमारविहारप्रासादे बृहस्पतिनामा गण्डः कामप्यैरतिं कुर्वाणः प्रभोरप्रसादाद्भ्रष्टप्रतिष्ठः श्रीमदणहिल्लपुरं प्राप्य षोढावश्यके प्रौढिं प्राप्य प्रभून् सिषेवे । कदाचिच्चातुर्मासिकपारणके प्रभूणां पादयोर्द्वादशावर्तवन्दनादनु—

२२) चतुर्मासी[3] यावत्तव पदयुगं नाथ निकषा
कषायप्रध्वंसाद्विकृतिपरिहारव्रतमिदम् ।
इदानीमुद्भिद्यन्निजचरणनिर्लोठितैंकले-
र्जलक्लिन्नैरन्नैर्मुनितिलकवृत्तिर्भवतु मे ॥

इति विज्ञपयंस्तत्कालागतेन राज्ञा प्रसन्नान्प्रभून्विमृश्य स पुनरेव तत्पददानपात्रीकृतः । इति बृहस्पतिगण्डस्य पुनः पददानप्रबन्धः ।

३२ अथान्यदा सर्वावसरस्थितेन राज्ञालिगनामा वृद्धः प्रधानपुरुष इत्यपृच्छ्यत । यदहं श्रीसिद्धनृपतेर्हीनः समानोऽधिको वा । तेन चाऽच्छलप्रार्थनापूर्वं श्रीसिद्धनृपतेः षण्णवैतिर्गुणा द्वौ दोषौ । स्वामिनस्तु द्वौ गुणौ तत्संख्या एव दोषा इति तद्वाक्यादनु दोषमये आत्मनि विरागं दधानो यावच्छुरिकां चक्षुषि क्षिपति तावदाशयविदा तेनेति व्यज्ञपि । श्रीसिद्धनृपतेः षण्णवतिगुणाः संग्रामासुभटत्वास्त्रीलम्पटता-

---

१ इति सालगवसहिउद्धारप्रबन्धः H २ कामपि रतिं c जैनधर्मे कामप्यरतिं L ३ चतुर्मासीमासीत् a ४ कवे c d ५ अष्टनवतिः H

दोषाभ्यां तिरोहिताः। कार्पण्यादयो भवद्दोषाः समरशूरतापरनारीसहोदरतागुणाभ्यामपह्नुता इति तद्वचसा स पृथ्वीनाथः स्वस्थावस्थस्तस्थौ। इत्यालिगप्रबन्धः।

३३ अथ पुरा श्रीसिद्धराजराज्ये पाण्डित्ये स्पर्धमानो वामराशिनामा विप्रः प्रभूणां प्रतिष्ठानिष्ठामसहिष्णुः।

२३) यूकालक्षशतावलीवलवलल्लोलोल्लसत्कम्बलो
दन्तानां मलमण्डलीपरिचयाद्दुर्गन्धरुद्धाननः।
नासावंशविरोधनाद्धिणिगिणैत्पादप्रतिष्ठास्थितिः
सोऽयं हेमडसेवडः पिलपिलत्खल्लिः समागच्छति॥

इति तदीयममन्दं निन्दास्पदं वचनमाकर्ण्यान्तर्भूतामर्षवत्तर्जनापरं वचः प्रभुभिरभिहितं पण्डित विशेषणं पूर्वमिति भवता किं नाधीतमतोऽतः परं सेवडहेमड इत्यभिधेयमिति, सेवकैः कुन्तपश्चाद्भागेनाहत्य मुक्तः। श्रीकुमारपालनृपते राज्येऽशस्त्रो वध इति तद्वृत्तिच्छेदः कारितः। स ततः परं कणभिक्षया प्राणाधारं कुर्वाणः प्रभूणां पौषधशालायाः पुरतः स्थितः। आनादिभूपतितपस्विभिरधीयमानयोगशास्त्रमाकर्ण्याऽशठतयेदमपाठीत्—

२४) आतङ्ककारणमकारणदारुणानां
वक्त्रेषु गालिगरलं निरगालि येषाम्।
तेषां जटाधरफटाधरमण्डलानां
श्रीयोगशास्त्रवचनामृतमुज्जिहीते॥

इति तद्वचसाऽमृतधारासारेण निर्वाणपूर्वोपतापास्तस्मै द्विगुणां वृत्तिं प्रसादीकृतवन्तः। इति वामराशिप्रबन्धः।

३४ अथ कदाचिच्चारणौ द्वौ सुराष्ट्रमण्डलनिलयौ दूहाविद्यया स्प-

१ लिञ्चात. ० २ गिणिगिणी L ३ वक्त्रेण ०

र्धमानौ श्रीहेमाचार्येण यो व्याख्यायते सोऽपरस्य हीनोपक्षयं ददातीति प्रतिज्ञाय श्रीमदणहिल्लपुरं प्रापतुः तदैकेन प्रभुसमागतेन ।

२५) *लच्छिवाणिमुहकाणि एयइं[1] भागी मुह भरउं[2] ।
हेमसूरिअच्छीणि[3] जे ईंसरते ते पण्डिया ॥

इत्युक्त्वाभ्यर्णं स्थिते तस्मिन् श्रीकुमारपालविहारे आरात्रिकावसरानन्तरं प्रणामपरो नृपः प्रभुणा दत्तपृष्ठिहस्तः क्षणं यावत्तिष्ठति । अत्रान्तरे प्रविश्य द्वितीयश्चारणः ।

२६) *हेम तुहाला कर भरउं जांह अच्चंप्भूँरिद्दि ।
जेवं पह हिठा मुहा तांह ऊपहरी सिद्धिं[5] ॥

इत्यनुच्छिष्टेन तद्वचसान्तश्चमत्कृतो नृपतिरेतदेव भूयोभूयः पाठयामास । ततस्त्रिःकृत्वः पठिते[6] किं पठिते लक्षं दास्यसीति विज्ञप्तस्तस्मै त्रिलक्षं दापयामास । इति **सौराष्ट्रचारणयोः प्रबन्धः ।**

**३९** कदाचिच्छ्रीकुमारपालनृपतिः श्रीसंघाधिपतीभूय तीर्थयात्रां चिकीर्षुर्महता महेन श्रीदेवालयप्रस्थाने सञ्जाते सति देशान्तरायातयुगलिकया त्वां प्रति डाहलदेशीयकर्णनृपतिरुपैतीति विज्ञप्तः स्वेदबिन्दुतिलकितललाटं दधानो मन्त्रिवाग्भटेन साकं साध्वसध्वस्तसंघाधिपत्यमनोरथः प्रभुपादान्ते स्वं निनिन्द । अथ तस्मिन्नृपतेः समुपस्थिते महाभये किञ्चिदवधार्य द्वादशे यामे भवतो निवृत्तिर्भविष्यतीत्यादिश्य विसृष्टो नृपः किंकर्तव्यतामूढो यावदास्ते तावन्निर्णीतवेलायां समागतयुगलिकया श्रीकर्णो दिवं गत इति विज्ञप्तो नृपेण ताम्बूलमुत्सृज्य कथमिति पृष्टौ तावूचतुः । कुम्भिकुम्भस्थः श्रीकर्णः प्रयाणं निशि कुर्वन्निद्रामुद्रितलोचनः कण्ठपीठप्रणयिना सुवर्णशृङ्खलेन प्रविष्टन्यग्रोध-

१ पयइ H c २ मरउ b ३ सूरिआ छाणि c ४ जिंह अच्चुपुयरिद्धि c D ५ जे चंपहहिठा मुहा तीह उबहरी सिद्दी c D ६ त्रिःपठिते c D

पादपेनोल्लम्बितः पञ्चतामञ्चितवान्। तस्य संस्कारानन्तरमावां प्रचलिताविति ताभ्यां विज्ञप्ते तत्कालं पौषधवेश्मनि समागतो नृपः प्रशंसापरः कथं कथमित्यपवार्य द्वासप्ततिमहासामन्तैः समं समस्तसंघेन च प्रभुणा द्विधोपदिश्यमानवर्त्मा धुन्धुक्कनगरे प्राप्तः प्रभूणां जन्मगृहभूमौ स्वयं कारितसप्तदशहस्तप्रमाणझोलिकाविहारे प्रभावनां विधित्सुर्जातिपिशुनानां द्विजातिनामुपसर्गमुदितं वीक्ष्य तान्विषयताडितान्कुर्वन् श्रीशत्रुंजयतीर्थमाराधयन्।

३६ दुक्खक्खउं कम्मक्खउं इति प्रणिधानदण्डकमुच्चरन् देवस्य पार्श्वे विविधप्रार्थनावसरे।

२७) इक्कह फुल्लह माटि देअइ सामी सिद्धिसुहु[1]।
तिणिसिउं[2] केही साटी भोलिम जिणवरह॥

इति चारणमुच्चरन्तं निशम्य नवकृत्वः पठितेन नवसहस्रांस्तस्मै नृपो ददौ। तदनन्तरमुज्जयन्तसन्निधौ गते तस्मिन्नकस्मादेव पर्वतकम्पे सञ्जायमाने श्रीहेमचन्द्राचार्या नृपं प्राहुः। इयं छत्रशिला युगपदुपेतयोर्द्वयोः पुण्यवतोरुपरि निपतिष्यतीति वृद्धपरम्परा[3], तदावां पुण्यवन्तौ यदियं गीः[4] सत्या भवति तदा लोकापवादः, नृपतिरेव देवं नमस्करोतु न वयमित्युक्ते, नृपतिनोपरुध्य प्रभव एव संघेन सह प्रहिताः स्वयं छत्रशिला[5]मार्गं परिहृत्य परस्मिन्जीर्णप्राकारपक्षे नव्यपद्याकरणाय श्रीवाग्भटदेव आदिष्टः पद्यायाः पक्षद्वये व्ययीकृतास्त्रिषष्टिलक्षाः। इति तीर्थयात्राप्रबन्धः।*

---

१ देवइ सिद्धि सुठु केहि साटि कटि रेभोतिम c D २ सउं c ३ वृद्धपरंपरया P ४ गीरसत्या सत्या P ५ छत्रशिला a * कृष्णर्षीयजयसिंहसूरिविरचिते कुमारपालचरिते नवमसर्गे वर्णितोयं प्रबंधः

३७ कदाचित्पृथिव्यामानृण्याय नृपतिना स्वर्णसिद्धये श्रीहेमचन्द्राणामुपदेशात्तद्गुरवः श्रीसंघनृपतिविज्ञप्तिकाभ्यामाकारितास्तीव्रव्रतपरायणा महत्संघकार्यं विमृश्य विधिविहारक्रमेण पथि केनाप्यलक्ष्यमाणा निजामेव पौषधशालामागताः । राजा तु प्रत्युद्गमादिसामग्रीं कुर्वन् प्रभुज्ञापितस्तत्राययौ । अथ गुरौ नृपतिप्रमुखैः समस्तश्रावकयुतैः प्रभुभिर्द्वादशावर्तवन्दनावन्दिते वन्दनान्ते तौ श्रुततदुपदेशानन्तरं गुरुभिःपृष्टे संघकार्ये सभां विसृज्य जवनिकान्तरितौ श्रीहेमचन्द्रनृपती तत्पादयोर्निपत्य सुवर्णसिद्धेर्याचनां चक्राते । मम बाल्ये वर्तमानस्य ताम्रखण्डः काष्ठभारवाहिकातो याचितवल्लीरसेनाभ्यक्तो युष्मदादेशाद्वह्निसंयोगात्सुवर्णीबभूव । तस्या वल्लेर्नामसंकेतादिरादिश्यतामिति, श्रीहेमाचार्ये उक्तवति कोपाटोपात् श्रीहेमचन्द्रं दूरतः प्रक्षिप्य न योग्योऽसीति । अग्रे मुद्गरसप्रायदत्तविद्यया त्वमजीर्णभाक् कथमिमां विद्यां मोदकप्रायां तव मन्दाग्नेर्ददामीति तं निषिध्य नृपं प्रति एतद्भाग्यं भवतो नास्ति येन जगदानृण्यकारिणी हेमनिष्पत्तिविद्या तव सिध्यति । अपि च मारिनिवारणजिनमण्डितपृथ्वीकरणादिभिः पुण्यैः सिद्धे लोकद्वये किमधिकमभिलषसीत्यादिश्य तथैव विहारक्रमं कृतवन्तः ॥

* [ एकदा पृष्टं राज्ञा पूर्वभवस्वरूपं तत्सर्वं कथितं प्रभुभिरिति । ]

३८ अथ कस्मिन्नप्यवसरे सपादलक्षं प्रति सज्जीकृते सैन्ये श्रीवाग्भटस्यानुजन्मा चाहडनामा मन्त्री दानशौण्डतया दूषितोऽपि भृशमनुशिक्ष्य भूपतिना सेनापतिश्चक्रे । तेन प्रयाणद्वितयानन्तरमस्तोकमर्थिलोकं मिलितमालोक्य कोशाधिपाल्लक्षद्रव्ये याचिते, नृपादेशात्तस्मिन्न ददाने अथ तं कशाप्रहारेणाहत्य स सेनापतिस्तं कटकान्निरवासयत् । स्वयं तु यदृच्छया दानैः प्रीणितार्थिलोकश्चतुर्दशशतसंख्यासु करभीष्वारोपितै-

* कोष्टकान्तर्गतं वचनमिदं a H L M आदर्शेषु नास्ति परन्तु मुद्रितपुस्तके वर्तते प्रसंगस्तु चतुर्विंशतिप्रबन्धे वर्णितः

द्विगुणैः सुभटैः समं चरन्मितैः प्रयाणैर्बम्बेरानगरे प्राकारं वेष्टयामास। अथ तस्यां निशि सप्तशतीकन्यानां विवाहः प्रारब्धोऽस्तीति नगरलोकात् श्रुत्वा तद्विवाहार्थं तथैव निशि स्थित्वा प्रातः प्राकारपरावर्त्तं चकार। तत्राधिगतं स्वर्णकोटीसप्तकं तथैकादशसहस्राणि बडवानामिति संपत्तिगर्भितां विज्ञप्तिकां वेगवत्तरैश्चरैर्नृपं प्रति प्राहिणोत्। स्वयं तत्र देशे श्रीकुमारपालनृपतेराज्ञां दापयित्वाऽधिकारिणो नियोज्य व्याघुटितः श्रीपत्तनं प्रविश्य राजसौधमधिगम्य नृपं प्रणनाम। नृपस्तदुचितालापावसरे तद्गुणरञ्जितोऽप्येवमवादीत्। तव स्थूललक्ष्यतैव महद्दूषणं। (वाहानीकयोःसाधनादौ साधीयान् नेदीयान्प्रयोगनिष्पत्तिरक्षामन्त्रो नो चेच्चक्षुर्दोषेणोर्द्ध्व एव विदीर्यसे) यं व्ययं भवान्कुरुते तादृशं कर्तुमप्यहं न प्रभूष्णुः। स इति श्रुतनृपादेशान्नृपं प्रति "तथ्यमेव तदादिष्टं देवेन" एवंविधं व्ययं कर्तुं प्रभुर्न प्रभवति। यतः स्वामी परंपरया न नृपतेः सुतः। अहं तु नृपपुत्रोऽतो मयैव द्रव्यव्ययः साधीयान्क्रियते*। तेनेति विज्ञप्ते नृपतिस्तोषं करोतु रोषं वा निकषः निकषा काञ्चनश्रियमासादयतीत्यनर्घ्यतां लभमानो नृपतिविसृष्टः स्वं पदं प्रपेदे। इति राजघरट्टचाहडप्रबन्धः॥

३९ अथ तस्य कनीयान्भ्राता सोलाकनामा मण्डलीकः सत्रागारबिरुदं बभार।

४० अथ कदाचिदानाकनामा मातृष्वस्रीयस्तत्सेवागुणतुष्टेन राज्ञा दत्तसामन्तपदोऽपि तथैव सेवमानः। कदापि मध्यन्दिनावसरे चन्द्रशालापल्यङ्कस्थितस्य नृपतेः पुरो निविष्टः सहसा कमपि प्रेष्यं तत्र प्राप्तं

---

१ मत्वा P H २ b c D आदर्शेषु कोष्ठकान्तर्गता पङ्क्तिर्नास्ति ३ कर्तुं क्षमते c
* यतोऽहं स्वामिबलेन व्ययं करोमि। स्वामी तु कस्य बलेनातो मयैव द्रव्यव्ययः साधीयान् क्रियते इति वदन् प्रमुदितेन राज्ञा सत्कृतो राजसदस्यनर्घ्यतां लभमानो राजघरट्टबिरुदं लब्ध्वा। इति जिनमण्डनोपाध्यायकृतकुमारपालप्रबन्धे प. ९४
४ रोषं वा निकषा A ५ बाहड A ६ तथा A

प्रेक्ष्य कोऽयमिति पृष्टे नृपतिना श्रीमदानाकः स्वं कर्मकरमुपलक्ष्य तत्सङ्केतान्निकेतनान्निर्गत्य सकौशलं पृष्टः पुत्रजन्मवर्धापनिकां प्रार्थयामास । ओमिति तया वार्तया तु दिनकरप्रभयेव विकसितवदनारविन्दः तं विसृज्य स्वं पदमुपेतः । राज्ञा किमेतदिति पृष्टस्तेन स्वामिनः पुत्रोत्पत्तिरिति विज्ञप्ते, वसुधाधवः स्वगतं किञ्चिदवधार्य तं प्रति प्रकाशं प्राह । यज्जन्म निवेदयितुमयं कर्मकरो वेत्रिभिरस्खलित एवेमां भुवंमाप[1] तावता पुण्योपचयेनायं गूर्जरदेशे नृपो भावी परमस्मिन्पुरे धवलगृहे च न । यतोऽतः स्थानादुत्थापितस्य तवाग्रे सुतोत्पत्तिर्निवेदिता । ततो हेतोर्नास्मिन्नगरेश्वरत्वम्[2]मिति विचारचतुर्मुखेन श्रीकुमारपालदेवेन निर्णीतम् । इति लवणप्रसादप्रबन्धः ॥

४१)२८) आज्ञावर्तिषु मण्डलेषु विपुलेष्वष्टादशस्वादरा-*
दब्दान्येव चतुर्दश प्रसृमरां मारिं निवार्यौजसा ।
कीर्तिस्तम्भनिभांश्चतुर्दशशतीसंख्यान्विहारांस्तथा
कृत्वा निर्मितवान्कुमारनृपतिर्जैनो निजैनोव्ययम् ॥

अथ प्रभोः कदाचित्कच्छराजलक्षराजमातुर्महासत्याः शापाच्छ्रीमूलराजान्वयानां[3] लूतारोगः संक्रामतीति[4] सम्बन्धात्तु गृहिधर्मप्रतिपत्त्यवसरे प्रभोरुद्धणितराज्यभारे श्रीकुमारपाले तच्छिद्रेण तान्प्रविश्य लूताव्याधिर्बाधामधात् । तद्दुःखदुःखिते सराजलोके राज्ञि प्रणिधानान्निजमायुः सबलं वीक्ष्याऽष्टाङ्गयोगाभ्यासेन प्रभवस्तं लीलयोन्मूलितवन्तः× ।

---

१ वायमाप P २ तस्मिन्नगरे नरेश्वरत्वं C

* कर्णाटे १ गूर्जरे २ लाटे ३ सौराष्ट्रे ४ कच्छ ५ सैन्धवे ६ ।
उच्चायां ७ चैव भम्भेर्यां ८ मारवे ९ मालवे १० तथा ॥ १
कौङ्कणे च ११ महाराष्ट्रे १२ कीरे १३ जान्लधरे १४ पुनः ।
सपादलक्षे १५ मेवाडे १६ दीपा १७ भीराख्ययोरपि १८॥२
इति जिनमण्डनोपाध्यायकृतकुमारपालप्रबन्धे पत्र ५७

३ राजन्यानां A C H ४ तीति स व्याधिः कुमारपाले बाधामधात् P

× तयातनाबाधितमूर्तिरुच्चैः पप्रच्छ सूरिं गदशान्तिहेतुम् ।
आयुर्धनं श्रीकुमरस्य वीक्ष्य ते दक्षमुख्या अवदन्निमृश्य ॥

४२ कदापि कदलीपत्राधिरूढं कमपि योगिनमालोक्य विस्मिताय नृपतये आसनबन्धेन चतुरङ्गुलमूलभूमित्यागाद्ब्रह्मरन्ध्रेण निर्यत्तेजःपुञ्जं प्रभवो दर्शयामासुः ।

अथ चतुरशीतिवर्षप्रमाणायुःपर्यन्ते निजमवसानदिनमवधार्यान्त्याराधनक्रियायामनशनपूर्वप्रारब्धायां तदर्तितरलिताय नृपतये षण्मासीशेषमायुरास्ते संतत्यभावाद्विद्यमान एव निजामुत्तरक्रियां कुर्या इत्यनुशिक्ष्य दशमद्वारेण प्राणोत्क्रान्तिमकार्षुः । तदनन्तरं प्रभोः संस्कारादनु तद्भस्म पवित्रमिति राज्ञा तिलकव्याजेन नमश्चक्रे । ततः समस्तसामन्तैस्तदनु नगरलोकैस्तत्रत्यमृत्स्नायां गृह्यमाणायां तत्र हेमखण्ड इत्यद्यापि प्रसिद्धिः ।

४३ अथ राजा बाष्पाविललोचनः प्रभुशोकविक्लवमना[1] सचिवैर्विज्ञप्त इदमवादीत् । स्वपुण्यार्जितोत्तमतमलोकान् प्रभून् शोचामि किं तु निजमेव सप्ताङ्गराज्यं सर्वथा परिहार्यं राजपिण्डदोषदूषितं, यन्मदीयमुद-

निवेश्यतेऽन्यो यदि कोपि राज्ये हित्वामयस्त्वां तमयं प्रयाति ॥
उवाच चातुर्यनिधिर्नरेशो निहन्म्यहं किं निजजीवितार्थं ।
वराकमन्यं परमार्थविज्ञः गिरः सुधासारसमा निपीय ॥
दयाकिरस्ता अवदद्यतीशः निविश्य राज्ये स्वयमेव दुःखम् ।
तते हरिष्यामि नरेश्वराहं अवोचदुच्चैश्चकितो नरेशः ॥
को देववृक्षं पिचुमन्दहेतोश्चिन्तामणिं काचकृते निहन्ति ।
रोगं निहन्तुं मम शक्तिरस्ति स्वाज्ञान्तरं योगबलेन राजन् ।
ततः कुमारो महता महेन न्यवीविशत्सूरिवरं स्वराज्ये ।
हित्वा कुमारं परिमुक्तराज्यं लूतामयः सूरिशरीरमाप ॥
रोगं हन्तुं निश्चलाङ्गः स योगी प्राणायामं पूरकाख्यं वितेने ।
ऊर्ध्वं नीते, सूर्यबिम्बे समन्ताच्चन्द्रस्तापाद्द्राग् सुधाभिर्ववर्ष ॥
श्लिष्टं ताभिः सर्वरोगापहाभिर्वेगादङ्गं चङ्गमासीदमुष्य ।
इति चारित्रसुन्दरगणिकृतकुमारपालचरित्रस्य दशमसर्गस्य प्रथमवर्गे प. ३४

1 विप्लवमनाः P

कमपि जगद्गुरोरङ्गे न लग्नं तदेव शोचामीति प्रभुगुणानां स्मारं स्मारं सुचिरं विलप्य प्रभूदिते दिने तदुपदिष्टविधिना समाधिमरणेन नृपः स्वर्लोकमलंचकार ॥ सं० ११९९ पूर्ववर्ष ३१ श्रीकुमारपालदेवेन राज्यं कृतं।

४४ सं० १२३० वर्षेऽजयदेवोऽभिषिक्तः । अस्मिन्पूर्वजप्रासादान् विध्वंसयति सीलनामा[1] कौतुकी नृपपुरः प्रारब्धेऽवसरे कृतककामपटुतां मायया निर्माय तत्र स्वकल्पितं देवकुलपञ्चकं पुत्रेभ्यः समर्प्य ममानन्तरं भक्त्यतिशयेनाराधनीयमित्यनुशिक्ष्यान्त्यावस्थायां यावदास्ते तावत्तेन लघुपुत्रेण तत्तूर्णं चूर्णितमाकर्ण्य रे श्रीमदजयदेवेनापि पितुः परलोकानन्तरं तद्धर्मस्थानानि विध्वंसितानि त्वं त्वद्यापि मयि विद्यमानेऽपि चूर्णयन्नधमतमोऽसीति तदालापेन सत्रपस्तस्मादसमञ्जसाद्विरराम ।

४५ तदनु श्रीअजयदेवेन श्रीकपर्दिमन्त्री महामात्यपदं दातुमत्यर्थमभ्यर्थितः प्रातः शकुनान्यवलोक्य तदनुमत्या प्रभोरादेशमाचरिष्यामीत्यभिधाय शकुनगृहं गतस्ततः सप्तविधं दुर्गादेव्या शकुनं याचितमवाप्य तच्छकुनं पुष्पाक्षतादिभिरभ्यर्च्य कृतकृत्यं[2] मन्यमानः पुरगोपुरान्तः प्राप्तो नदन्तं वृषभमीशानदिग्भागे विलोक्यातिशयस्मेरमनाः स्वं निवासमासाद्य भोजनानन्तरं मरुवृद्धेन यामिकेन शकुनस्वरूपं पृष्टः श्रीकपर्दी तदग्रे तत्स्वरूपमादिश्य तांस्तुष्टाव । ततो मरुवृद्धः—

२९) नद्युत्तारेऽध्ववैषम्ये तथा सन्निहिते भये ।
नारीकार्ये रणे व्याधौ विपरीतो[3] प्रशस्यते ॥

इति प्रामाण्याद्भवानासन्नव्यसनतया मतिभ्रंशात्प्रतिकूलमप्यनुकूलं मनुते[4] । यस्त्वया वृषभः शुभः परिकल्पितः सोऽपि भवद्व्यापत्त्या शिवस्याभ्युदयं पश्यंस्त्वद्वाहनोक्षा[5] जगर्जेति तदुक्तिमवमन्यमाने तस्मिन्नापृच्छ्य

१ सीलण नामा H २ कृतकृत्यमानी a H ३ विपरीतः C ४ मनुषे a H ५ तद्वदाहात उक्षा P

तीर्थान्यऽवगाढुं गते, स नृपतिना प्रसादीकृतां मुद्रामासाद्य महता महेन समधिगतनिजसौधे विश्रम्य निशि नृपतिना विधृतः समानमतिष्ठैरभिभवितुमारब्धः ।

२०) जो करिवराण कुम्भे पायं दाऊण मुत्तिए दलइ ।
सो सीहो विहिवसउ जम्बूयपरिपिल्लणं सहइ ॥

इत्यादि विमृशन्कटाहिकायां प्रक्षेपकाले ।

२१) अर्थिभ्यः कनकस्य दीपकपिशा विश्राणिताः कोटयो
वादेषु प्रतिवादिनां विनिहिताः शास्त्रार्थगर्भा गिरः ।
उत्खातप्रतिरोपितैर्नृपतिभिः शारैरिव क्रीडितं
कर्तव्यं कृतमर्थिता यदि विधेस्तत्रापि सज्जा वयम् ॥

स सुधीरित्यन्त्यकाव्यमधीयंस्तथैव व्यापादयांचक्रे । इति श्री कपर्दिप्रबन्धः ॥

४६ अथ श्रीप्रबन्धशतकर्ता रामचन्द्रस्तु तेन भूपापसदेन तप्तताम्रपट्टिकायां निवेश्यमानः ।

३२) महिवीढह सचराचरह जिण सिरि दिह्ला पाय ।
तसु अत्थमणु दिणेसरहँ होउत होईँ चिरायँ ॥

इत्युदीर्य दशनाग्रेण रसनां छिन्दन् विपन्न एव व्यापादयांचक्रे । इति रामचन्द्रप्रबन्धः ।

४७ अथ राजपितामहः श्रीमानाम्रभटस्तत्तेजोऽसहिष्णुभिः सामन्तैस्तैः समं तदालब्धावसरैः प्रणामं कारयद्भिराक्षिप्त एवमवादीत् । देवबुद्ध्या श्रीवीतरागस्य, गुरुबुद्ध्या श्रीहेमचन्द्रर्षेः, स्वामिबुद्ध्या कुमारपालस्यैव मे नमस्कारोऽस्मिन् जन्मनीति जैनधर्मवासितसप्तधातुना तेने-

१ तदर्थान P २ जिणिसिरि दिन्ना a ३ दिणसरहु c d ४ होइहु होइ c d
५ चिराउ a b

त्यभिहिते रुष्टो राजा । युद्धसज्जो भवेति तद्गिरमाकर्ण्य श्रीजैनबिम्बं समभ्यर्च्याऽनशनं प्रपद्याङ्गीकृतसंग्रामदीक्षो निजसौधाद्राज्ञः परिग्रहं निजभटव्रातेन तुषनिकरमिव विकरन् घटिकागृहे प्रासस्तेषां मलीमसानां सञ्जनितं कश्मलं धारातीर्थे प्रक्षाल्य तत्कौतुकालोकनागताभिरप्सरोभिरहंपूर्विकया व्रियमाणो देवभूयं जगाम ॥

३३) वरं भट्टैर्भाव्यं वरमपि च खिङ्गैर्धनकृते
वरं वेश्याचार्यैर्वरमपि महाकूटनिपुणैः ।
दिवं याते दैवादुदयनसुते दानजलधौ
न विद्वद्भिर्भाव्यं कथमपि बुधैर्भूमिवलये ॥

३४) त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते* ॥

४८ इति पुराणोक्तप्रामाण्यात्स कुपतिर्वयजलदेवनाम्ना प्रतीहारेण क्षुरिकया हतो धर्मस्थानपातनपातकी कृमिभिर्भक्ष्यमाणः प्रत्यहं नरकमनुभूय परोक्षतां प्रपेदे । सं० १२३० पूर्वमजयदेवेन वर्ष ३ राज्यं कृतम् ॥

४९ सं० १२३३ पूर्ववर्ष २ बालमूलराजेन राज्यं कृतमस्य मात्रा नाइकिदेव्या परमर्दिभूपसुतयोत्सङ्गे शिशुं निधाय गाडरारघट्टनामनि घाटे संग्रामं कुर्वत्या म्लेच्छराजा तत्सत्त्वादकालागतजलदपटलसाहाय्येन विजिग्ये ॥

५० सं० १२३५ पूर्ववर्ष ६३ श्रीभीमदेवेन राज्यं कृतमस्मिन् राज्ञि राज्यं कुर्वाणे श्रीसोहडनामा मालवभूपतिर्गूर्जरदेशविध्वंसनाय सीमान्तमागतस्तत्प्रधानेन सम्मुखं गत्वेत्यवादि—

प्रतापो राजमार्तण्ड पूर्वस्यामेव राजते ।
स एव विलयं याति पश्चिमाशावलम्बिनः ॥

* हितोपदेशे दृश्यते पद्यमिदम् १ प्रमाणो a P

इति विरुद्धां तद्गिरमाकर्ण्य स पश्चान्निववृते । तदनु तत्पुत्रेण श्रीमदर्जुनदेवनाम्ना गूर्जरदेशभङ्गोऽप्यकारि ।

९१ श्रीमद्भीमदेवराज्यचिन्ताकारी व्याघ्रपल्लीसङ्केतप्रसिद्धः श्रीमदानाकनन्दनः श्रीलवणसाहप्रसादश्चिरं राज्यं चकार । तत्सुतः साम्राज्यभारधवलः श्रीवीरधवलस्तन्माता मदनराज्ञी देवराजनाम्नो भगिनीपतेः पट्टकिलस्य भगिन्यां विपन्नायां तस्य बहुतरमनिर्वहमाणमायद्वारं[1] निशम्य तन्निर्वहणाय लवणप्रसादाभिधपतिमापृच्छय शिशुना वीरधवलेन समं तत्र गता सती तेन स्पृहणीयगुणाकृतिरिति गृहिणीचक्रे । श्रीलवणस्तद्वृत्तान्तं सम्यगवगम्य तं व्यापादयितुं निशि तद्गृहे प्रविष्टो निभृतीभूय स यावदवसरं निरीक्षते, तावत्स भोजनायोपविशन् वीरधवलं विना नाश्नामीति भूयो भूयो व्याहृत्य निर्बन्धात्समानीयैकस्मिन्नेव स्थालेऽश्नन्नकस्मादापतितं[2] शरीरिणं कृतान्तमिव स्वान्तकमालोक्य श्यामलास्यो मा भैषीरिति तेनोचे । यदहं त्वामेव हन्तुमागतः परमस्मिन्मन्नन्दने वीरधवले वात्सल्यं साक्षाच्चक्षुषा निरीक्ष्य तदाग्रहान्निवृत्तोऽस्मीत्युक्त्वा तेन सत्कृतो यथागतं जगाम । वीरधवलस्यापरपितृकाः[3] राष्ट्रकूटान्वयाः साङ्गणचामुण्डराजादयो वीरैजनत्वेन[4] भुवनतलप्रतीताः । अथ स वीरधवलक्षत्रिय उन्मीलितकिञ्चिच्चेतनस्तस्माद्वृत्तान्तात्त्रपमाणस्तद्गृहं त्यक्त्वा निजमेव जनकं सिषेवे ।

९२ सत्त्वौदार्यगाम्भीर्यस्थैर्यनयविनयौचित्यदयादानदाक्षिण्यादिगुणशाली शालीनतया कण्टकग्रस्तां[5] कामपि भुवमाक्रम्य पित्रापि-कियत्कृतजनपदप्रसादो द्विजन्मना चाहडनाम्ना सचिवेन चिन्त्यमानराज्यभारः प्राग्वाटवंशमुक्तामणिना पुरा श्रीमत्पत्तनवास्तव्येन तत्कालं तत्रायाततेजःपालमन्त्रिणा सह सौहार्दमुत्पेदे ।

---

१ आयद्वारं P २ दपि तं P ३ अपरमातृकाः a P ४ वीरव्रतेन H
५ कटकग्रस्तां. H

८३ मन्त्रिणस्तु जन्मवार्ता चैवं । कदाचिच्छ्रीमत्पत्तने भट्टारकश्रीहरिभद्रसूरिभिर्व्याख्यानावसरे कुमारदेव्यभिधाना काचिद्विधवातीव रूपवती मुहुर्मुहुर्निरीक्ष्यमाणा तत्र स्थितस्याशराजमन्त्रिणश्चित्तमाचकर्ष । तद्विसर्जनानन्तरं मन्त्रिणानुयुक्ता गुरव इष्टदेवतादेशादमुष्याः कुक्षौ सूर्याचन्द्रमसोर्भाविनमवतारं पश्यामः, तत्सामुद्रिकानि भूयो भूयो विलोकितवन्त इति प्रभोर्विज्ञाततत्त्वः स तामपहृत्य निजां प्रेयसीं कृतवान् । क्रमात्तस्या उदरेऽवतीर्णौ तावेव ज्योतिष्केन्द्राविव वस्तुपालतेजःपालाभिधानौ सचिवावभूतां ।

८४ अथान्यदा श्रीवीरधवलदेवेन निजव्यापारभारायाभ्यर्थ्यमानः प्राक् स्वसौधे तं सपत्नीकं भोजयित्वानुपमा राजपत्न्यै श्रीजयतलदेव्यै निजं कर्पूरमयताडङ्कयुग्मं कर्पूरमयं मुक्ताभिःसुवर्णमयमण्यन्तरिताभिर्निष्पन्नमेकावलीहारं सा प्राभृतीचकार, मन्त्रिणः प्राभृतमुपढौकितं निषिध्य निजं व्यापारं समार्पयत[1] । यत्तवेदानीं[2] वर्तमानं वित्तं तत्ते कुपितोऽपि प्रतीतिपूर्वं पुनरेवं[3] ददामीति, अक्षरपत्रान्तरस्थबन्धपूर्वकं[4] श्रीतेजःपालाय व्यापारसम्बन्धिनं पञ्चाङ्गप्रसादं ददौ ।

३४) अकरात्कुरुते कोशमवधाद्देशरक्षणम् ।
देशवृद्धिमयुद्धाच्च स मन्त्री बुद्धिमांश्च सः ॥

निखिलनीतिशास्त्रोपनिषन्निषण्णधीः स्वस्वामिनं वर्धयन् भानूदये कालपूजया विधिवच्छ्रीजिनमर्चित्वा गुरूणां चन्दनकर्पूरपूजानन्तरं[6] द्वादशावर्त्तवन्दनदानादनु यथावसरप्रत्याख्यानपूर्वमपूर्वमेकैकं श्लोकं गुरोरध्येति । मन्त्रावसरानन्तरं सद्यस्करसवतीपाकभोजनानन्तरं, मुञ्जालनामा महोपासकस्तदङ्गलेखकोऽवसरे रहसि पप्रच्छ । स्वामिनाहर्मुखे शीतान्न-

१ समर्पयन् H C २ यत्तावकादीनां b यन्सवेदानीं P ३ पुनरेवाददामि P
४ पात्रान्तरसम्बन्ध P ५ भूमि C ६ वन्दन P

माहार्यते किं वा सद्यस्कमिति पृच्छन्तं ग्रामेयं[1] द्वेधा त्रेधाऽवधीर्य कदाचित्क्रोधान्मन्त्रिणा पशुपाल इत्याक्षिप्तः । स धृतधैर्यः उभयोः कश्चिदेकतरः स्यादित्यभिहिते तद्वचश्चातुरीचमत्कृतचित्तोऽनधिगतभवदुपदेशध्वनिरहं, तद्विज्ञ यथास्थितं विज्ञप्यतामित्यादिष्टः स वाग्मी प्रोवाच । यां रसवतीमतीव रसप्लुतां सद्यस्कां प्रभुरभ्यवहरति तां प्राग्पुण्यरूपां जन्मान्तरिततयात्यन्तशीतलां मन्ये[2] । किं चेदं मया गुरोः संदेशवचनमाविःकृतं तत्त्वं तु त एवावधारयन्तीति तत्र पादाववधार्यतां तेनेति विज्ञप्तः श्रीतेजःपालनामा मन्त्री कुलगुरुभट्टारकश्रीविजयसेनसूरीणामभ्यर्णमागतो गृहिधर्मं[3] पप्रच्छ । तैरुपासकदर्शा[4]भिधसप्तमाङ्गाज्जिनोदितदेवपूजावश्यकयतिदानादिके गृहिधर्मे समुपदिष्टे, ततः प्रभृति स देवतार्चनविशेषजैनमुनिदानाद्यं धर्मकृत्यमारब्धवान् ।

५५ वर्षत्रयदेवतावसराय पदेन पृथक्कृतेन षट्त्रिंशत्सहस्रप्रमाणेन द्रव्येण बाउलाग्रामे श्रीनेमिनाथप्रासादः समजनि ॥ अथ सं० १२७७ वर्षे सरस्वतीकण्ठाभरणलघुभोजराजमहाकविमहामात्यश्रीवस्तुपालेन महायात्रा प्रारेभे । गुरूपदिष्टे लग्ने तत्कृत[5]संघाधिपत्याभिषेकेण श्रीदेवालयप्रस्थाने उपक्रम्यमाणे दक्षिणपथे[6] दुर्गादेव्याः स्वरमाकर्ण्य स्वयं तद्विदा शाकुनिकेन किञ्चिच्चिन्तयति । मरुवृद्ध शकुनं भारितं विधेहीत्यभिदधानः शकुनाच्छब्दो बलीयानिति विचार्य पुराद्बहिः[7]आवासेषु श्रीदेवालयं संस्थाप्य शकुनव्यतिकरं पृष्टो मार्गवैषम्ये शकुनानां वैपरीत्यं श्लाघ्यते, राज्यविकलतायां, तीर्थमार्गाणां वैषम्यं तथा, यत्र सा दुर्गा दृष्टिपथं गता तत्र कमपि दक्षं पुरुषं प्रस्थाप्य स प्रदेशो दृश्यतां । तथाकृते स पुरुष

---

१ ग्राम्योऽयं C २ मन्यते P ३ गृहिधर्मविधिं गुरून् a ४ जैनप्राकृते निबद्धो उवासगदसाहोऽभिधोऽयं ग्रन्थ श्री हर्नलमहाशयेन ' बीब्लोथीका इण्डीका' श्रेण्यां संशोध्य सानुवादः प्रकाशितः ५ तत्कृत्य P ६ दक्षिणपक्षे H ७ पुराद्बहिः P

इति विज्ञपयामास । यत्तस्मिन् वरण्डके* नवीक्रियमाणे सा त्रयोदशेष्वेरेषु निषण्णा देव्यभूत् । अथ स मरुवृद्धो देवी भवतः सार्धत्रयोदशसंख्या यात्रा अभिहितवती । अन्त्यार्धयात्राहेतुं भूयः पृष्टे स आह । इहातुलमङ्गलावसरे तद्वक्तुं न युक्तं, समये सर्वं निवेदयिष्यामीति वाक्यानन्तरं श्रीसंघेन समं मन्त्री पुरतः प्रयाणमकरोत् ।

८६ सर्वसंवाहनानामर्धपञ्चमसहस्राणि, एकविंशतिशतानि श्वेताम्बराणां, संघतद्रक्षाधिकारे सहस्रं तुरङ्गमाणां, सप्तशती रक्तकरभीणां, संघरक्षाधिकारिणश्चत्वारो महासामन्ताः । इत्थं समग्रसामग्र्या मार्गमतिक्रम्य श्रीपादलिप्तपुरे स्वयं कारितश्रीमहावीरचैत्यालङ्कृतस्य श्रीललितासरसः परिसरे आवासान्दापयामास । तत्र तीर्थाराधनां विधिवद्विधाय मूलप्रासादे काञ्चनकलशं प्रौढजिनयुगलं, श्रीमोढेरपुरावतारे श्रीमन्महावीरचैत्याराधकमूर्ती, देवकुलिकामण्डपश्रेणेरुभयतश्चतुष्किकाद्वयपङ्क्तिं, शकुनिकाविहारे सत्यपुरावतारे चैत्यपुरतो रजतमूल्यं तोरणं, श्रीसंघयोग्यान्मठान्, जामिसप्तकस्य देवकुलिकाः, नन्दीश्वरावतारे प्रासादान् इन्द्रमण्डपं च, तन्मध्ये गजाधिरूढश्रीलवणप्रसादवीरधवलमूर्ती, तुरङ्गाधिरूढां निजमूर्तिं, तत्र सप्त पूर्वपुरुषमूर्तीः सप्त गुरुमूर्तीश्च, तत्सन्निधौ चतुष्किकायां ज्यायोभ्रात्रोर्महं, मालदेवलूणिगयोराराधकमूर्ती, प्रतोलीः, अनुपमासरः, कपर्दियक्षमण्डपतोरणप्रभृतीनि बहूनि जिनधर्मस्थानानि रचयांचक्रे ।

८७ तथा नन्दीश्वरकर्मस्थाये कण्टेलीयापाषाणसत्कजातीयषोडशस्तम्भेषु पर्वतात् जलमार्गेणानीयमानेषु समुद्रोपकण्ठे उत्तार्यमाणेषु, एकः स्तम्भः पङ्के मग्नस्तथा यथा निरीक्ष्यमाणोऽपि न लभ्यते । तत्पदेऽपरपाषाणस्तम्भेन प्रासादः प्रमाणकोटिं नीतः । वर्षान्तरे वारिधिवेलावशात्प-

---

* वरण्डशब्दे P १ अत्राधिकं—त्रिशती दिग्वाससां a M K २ कारिते P ३ श्रीललित P श्रीतदीला C ४ धार्मिकसत्यकस्य P ५ नन्दीश्वरप्रासादाः D a ६ मालवदेव P ७ पावकपर्वतात् H K ८ समुद्रकण्ठोपकण्ठे a P

ङ्कनिमग्नः स एव स्तम्भः प्रादुरासीत्। सचिवसमादेशात्तस्मिंस्तत्र संचार्यमाणे प्रासादो विदीर्ण इति निवेदितुमागताय परुषभाषकाय हैमीं जिव्हां स मन्त्री ददौ। दक्षैः किमेतदिति पृष्टेऽतः परं यथाकथंचिद्धर्मस्थानानि दृढानि कारयिष्यन्ते यथा युगान्तेऽपि तेषां नान्तो भवति अतः पारितोषिकदानं। आमूलात्तृतीयवेलायामयं प्रासादः समुद्धृतो विजयते।

५८ श्रीपालिताणके च पौषधशालां विशालां कारयामास। श्रीमदुज्जयन्ते च श्रीसंघेन सह प्राप्तो मन्त्री तत्र च तदुपत्यकायां[1] तेजलपूरे[2] कारितं नव्यं वप्रं, तथा तन्मध्ये श्रीमदाशराजविहारं तथा कुमारदेवीसरश्च निरुपमं विलोक्य, धवलगृहे पादोऽवधार्यतामिति नियुक्तैरुच्यमाने, श्रीमद्गुरूणां योग्यं पौषधवेश्मास्ति नास्तीति मन्त्रिणादिष्टे तन्निष्पाद्यमानमाकर्ण्य विनयातिक्रमभीरुर्गुरुभिःसह बहिर्दापितावासे तस्थौ। प्रातरुज्जयन्तमारुह्य श्रीशैवेयक्रमकमलयुगलमभ्यर्च्य स्वयंकारितश्रीशत्रुंजयावतारतीर्थे प्रभूतप्रभावनां विधाय कल्याणत्रयचैत्यवर्यसपर्यादिभिस्तदुचितीमाचर्य मन्त्री यावत्तृतीये दिनेऽवरोहति तावदुभाभ्यां दिनाभ्यां निष्पन्ने पौषधौकसि मन्त्रिणा समं गुरवस्तत्र समानीतास्तत्प्रशशंसुः पारितोषिकदानेनानुजगृहुः[3]।

५९ श्रीमत्पत्तने प्रभासक्षेत्रे चन्द्रप्रभं प्रभावनया प्रणिपत्य यथौचित्यादभ्यर्च्य च निजेऽष्टापदप्रासादेऽष्टापदकलशमारोप्य तत्रत्यदेयलोकाय दानं ददानः श्रीहेमाचार्यैः श्रीकुमारपालनृपतये जगद्विदितं श्रीसोमेश्वरः प्रत्यक्षीकृत इति पञ्चदशाधिकवर्षशतदेशीयधार्मिकपूजाकारकमुखादाकर्ण्य तच्चरित्रचित्रितमना व्यावृत्तमानो मार्गे लिङ्गोपजीविनामसदाचारेणान्नदाने निषिद्धे, तत्पराभवं विज्ञाय वायडीयश्रीजिनदत्तसूरिभि-

१ उपत्यकान्ते CD २ जलपूरे P जलपुरे a L ३ नुजगृहे H

र्जिनोपासकपार्श्वात्तस्मिन्क्षणे पूर्यमाणे सति दर्शनानुनयार्थं[1] तत्र समागताय मन्त्रिणे—

३५) रत्नाकर इव क्षारवारिभिः परिपूरणात् ।
गम्भीरिमाणमाधत्ते शासनं लिङ्गधारिभिः ॥ १ ॥
३६) यान् लिङ्गिनोऽनुवदन्ते[2] संविग्ना अपि साधवः ।
तदर्चा चर्च्यते कस्माद्धार्मिकैर्भवभीरुभिः ॥ २ ॥
३७) प्रतिमाधारिणोऽप्येषां त्यजन्ति विषयं पुरः ।
लिङ्गिनां विषयस्थानामनर्चा तु विरोधिनी ॥ ३ ॥
३८) लिङ्गोपजीविनां लोके कुर्वन्ति येऽवधीरणाम् ।
दर्शनोच्छेदपापेन लिप्यन्ते ते दुराशयाः ॥ ४ ॥

आवश्यकवन्दनानिर्युक्तौ—

३९) तित्थयरगुणा पडिमासु नत्थि निस्संसयं वियाणन्तो ।
तित्थयरोवि[3] नमन्तो सो पावई निज्जरं विउलं १
४०) लिङ्गं जिणपन्नत्तं एव नमंसन्ति निज्जरा विउला ।
जइवि गुणप्पहीणं वन्दइ अज्झप्पसुद्धीएं ॥ २ ॥[6]

इति तदुपदेशान्निर्माजितसम्यक्त्वदर्पणो विशेषाद्दर्शनपूजापरः स्वस्थानमासदत् ।

६० अथ ज्यायसा सोदरेण मं० लूणिगनाम्ना परलोकप्रयाणावसरेऽर्बुदवसहिकायां[7] मम योग्या देवकुलिका कारयितव्येति धर्मव्ययं याचित्वा तस्मिन्विपन्ने तद्गोष्ठिकेभ्यस्तद्भुवमलभमानश्चन्द्रावत्याः स्वामिनः पार्श्वान्नव्यां भूमिं विमलवसहिकासमीपेऽभ्यर्थ्य तत्र श्रीलूणिगवसहिप्रासादं भुवनत्रयचैत्यशलाकारूपं कारयामासिवान् । तत्र श्रीनेमिनाथबिम्बं संस्थाप्य प्रतिष्ठितं तद्गुणदोषविचारणाकोविदं श्रीजाबालिपुराच्छ्रीयशो-

१ अनुनयार्थं b २ वन्दन्ति C ३ तित्थयरत्ति C ४ पामइ a ५ नर्मसुत्ति C ६ आवश्यकनिर्युक्तौ श्लोकद्वयं वर्तते ७ अर्बुदे विमलवसहिकायां H D

वीरमन्त्रिणं समानीय मन्त्री प्रासादस्वरूपं पप्रच्छ। ततस्तेन प्रासादकारकसूत्रधारः शोभनदेवोऽभ्यभायि। रङ्गमण्डपे शालभञ्जिकामिथुनस्य विशालघाटस्तीर्थकृत्प्रासादे सर्वथानुचितो वास्तुनिषिद्धश्च। तथा गर्भगृहे प्रवेशद्वारे सिंहाभ्यां तोरणमिदं देवस्य विशेषपूजाविनाशि। तथा पूर्वपुरुषमूर्तियुतगजानां शाला पश्चाद्भागे प्रासादकारापकस्यायतिविनाशि। अप्रतीकारार्हं दूषणत्रयं विज्ञस्यापि सूत्रभृतो यदुत्पद्यते स भाविकर्मणो दोष इति निर्णीय यथागतं स च गतः। तदुपश्लोकनश्लोका एवम्—

४१) यशोवीर यशोमुक्ताराशेरिन्दुरसौ शिखा।
तद्रक्षणाय रक्षायाः श्रीकारो लाञ्छनच्छलात् ॥ १ ॥

४२) बिन्दवः श्रीयशोवीर शून्यमध्या निरर्थकाः
संख्यावन्तो विधीयन्ते त्वयैकेन पुरस्कृताः ॥ २ ॥

४३) यशोवीर लिखत्याख्यां यावच्चन्द्रे विधिस्तव।
न माति भुवने तावदाद्यमप्यक्षरद्वयम् ॥ ३ ॥

इति श्रीशत्रुञ्जयादितीर्थानां यात्राप्रबन्धाः।

६१ अथ श्रीवस्तुपालस्य स्तम्भतीर्थे सइदनाम्ना नौवित्तकेन समं विग्रहे संजायमाने श्रीभृगुपुरान्महासाधनिकं शङ्खनामानं श्रीवस्तुपालं प्रति कोलरूपमानीतवान्। स जलधिकूले दत्तनिवासो नगरप्रवेशमार्गान् शत्रुसंकीर्णानालोक्य, व्यवहारिणां चित्तानि यानपात्रप्रणयीनि च वीक्ष्य प्रहितैर्बन्दिभिः श्रीवस्तुपालेन समं समरवासरं निर्णीय, यावच्चतुरङ्गसैन्यं सन्नह्यते तावच्छ्रीवस्तुपालेन पुरःकृतो गुडजातीयो लूणपालनामा सुभटो यदि शङ्खमन्तरेणाहं प्रहरामि तदा कपिलां धेनुमेवेति वारवर्णिकापूर्वं कः शङ्ख इति तद्वचनादनु शङ्खोऽहमिति प्रतिसुभटेनोदिते तं

१ विलासवाट D H २ पुरतः C ३ आयविनाशो D ४ बालकालरूपं K ५ भवण a लण D

निपात्य पुनरनयैव रीत्या द्वितीयेऽपि पातिते सति कथं समुद्रसामीप्यात् शङ्खबाहुल्यमित्युच्चरन् महासाधनिकशङ्खेनैव तत्सुभटतां श्लाघमानेनाहूतः कुन्ताग्रेण प्रहरन् सतुरग एकेनैव प्रहारेण व्यापादितः । तदनु श्रीवस्तुपालेन समराङ्गणप्रणयिना केसरिकिशोरेण च शङ्खसैन्यं गजयूथमिव त्रासितं दिशो दिशमनशत् । पश्चान्नौविचको मारितः सइयद इति । तदनु लूणपालमृत्युस्थाने लूणपालेश्वरप्रासादो मन्त्रिणा कारितः ।

६२ अथान्यस्मिन्नवसरे श्रीसोमेश्वरस्य कवेः काव्यम्—

४४) हंसैर्लब्धप्रशंसैस्तरलितकमलप्रत्तरङ्गैस्तरङ्गै—
नीरैरन्तर्गभीरैश्चटुलबककुलग्रासलीनैश्च मीनैः ।
पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतै-
र्भाति प्रक्रीडदूर्मिस्तव सचिव चलच्चक्रवाकस्तटाकः ॥
श्रीमन्त्रिणा षोडशसहस्रद्रम्माणां दत्तिः प्रसादीकृता ।

६३ कचिच्चिन्तातुरस्य मन्त्रिणो भूमिं मृगयमाणस्य समागतः सोमेश्वरदेवः समयोचितमिदमपाठीत् । तद्यथा—

४५) एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिराः स्थिरातलमिदं यद्वीक्ष्यसे वेद्मि तत् ॥
वाग्देवीवदनारविन्दतिलक श्रीवस्तुपाल स्वयं
पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान् मार्गति ॥

मन्त्रिणास्य काव्यस्य पारितोषिकेऽष्टौ सहस्राणि दत्तानि ।

६४ तथा—

४६) त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि । इति त्रिषु पदेषु पण्डितेष्वधीयमानेषु पण्डितजयदेवः समस्यापदमिव 'वस्तुपालः पुनर्वसु' । इत्युच्चरन् सहस्रचतुष्टयं लेभे ।

---

१ दाक्षिः b H २ सहस्रा दानैः प्रसादीकृताः D

६५ तथा सूरीणां दर्शनप्रतिलाभनावसरे केनापि दुर्गतद्विजातिना याचनया तन्नियुक्तेभ्यः कृपया पटीमुपलभ्य मन्त्रिणं प्रति समयोचितमूचे।

क्वचित्तूलं क्वचित्सूत्रं कार्पासास्थि क्वचित्क्वचित्।
देव त्वदरिनारीणां कुटीतुल्या पटी मम ॥

तत्पारितोषिके मन्त्रिणा दत्तानि पञ्चदशशतानि।

६६ तथा बालचन्द्रनाम्ना पण्डितेन श्रीमन्त्रिणं प्रति—

४७) गौरी रागवती त्वयि, त्वयि वृषो बद्धादरस्त्वं युतो
भूत्या, त्वं च लसद्गुणः शुभगणः किं वा बहु ब्रूमहे।
श्रीमन्त्रीश्वर नूनमीश्वरकलायुक्तस्य ते युज्यते
बालेन्दुश्चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः प्रभुः ॥

इत्युक्ते तस्याचार्यपदस्थापनायां द्रम्मसहस्रं व्ययीकृतं ॥

६७ कदाचिन्म्लेच्छपतेः सुरत्राणस्य गुरुमालिमं मखतीर्थयात्राकृते इह समागतमवगम्य तज्जिघृक्षुभ्यां श्रीलवणप्रसादवीरधवलाभ्यां श्रीतेजःपालमन्त्री मन्त्रं पृष्ट एवमाख्यातवान्।

४८) धर्मछद्मप्रयोगेण या सिद्धिर्वसुधाभुजाम्।
स्वमातृदेहपण्येन तदिदं द्रविणार्जनम् ॥

इति नीतिशास्त्रोपदेशेन वृकयोरिव तयोः छागमुन्मोच्य पाथेयादिना सत्कृत्य तं तीर्थं प्रति प्रहितवान्। स च कियद्भिर्वर्षैः[2] पश्चाद्व्यावृत्तः श्रीमन्त्रिणा तदुचितनेपथ्यादिभिः सत्कृतः स स्वस्थानं प्राप्तस्तीर्थगुणानां विस्मरन् श्रीसुरत्राणपुरतः श्रीवस्तुपालमेव वर्णयामास। स सुरत्राणस्तदनन्तरमस्माकं देशे भवानेवाध्यक्षोऽहं तु भवतः सेलभृत् तत्त्वयाहं यत्कृत्यादेशेनैव सर्वदा[3]नुग्राह्य इति प्रतिवर्षं तत्प्रहितयमलकपत्रेणोपरुध्यमान श्रीमन्त्रीशः श्रीशत्रुञ्जयभूमिगृहयोग्यं श्रीयुगादिजिनबिम्बं धन्यं मन्य-

१ मका २ दिनैः b D ३ सर्वथा C

मानस्य सुरत्राणस्यानुज्ञया तद्देशवर्तिन्या मुम्माणीनाम्न्याः[1] खन्याः प्रयत्नशतैरानीतवान् । तस्मिन्नप्यारोहति श्रीमूलनायकस्यामर्षात्पर्वते विद्युत्पातः समजनि । ततः प्रभृति श्रीमन्त्रीश्वरस्याजीवितान्तं श्रीदेवपादैर्दर्शनं न ददे ।

६८ कस्मिंश्चित्पर्वणि श्रीमदनुपमया निरुपमे मुनीनामन्नदाने यदृच्छया दीयमाने कार्यौत्सुक्यात्तदागतः श्रीवीरधवलदेवः सिताम्बरदर्शिनं[2] द्वारप्रदेशे पाणिंधममालोक्य विस्मयस्मेरमानसो मन्त्रिणमभीहितवान् । हे मन्त्रिण ! इत्थं सदैवाभिमतदैवतवत् किममी न सत्क्रियन्ते । तव चेदशक्तिस्तदर्धभागो ममास्तु । मामकमेव सर्वं वा दीयतां सदैवेत्यतः कारणान्नोच्यते तथा कृते भवतो वृथायास एव स्यादिति तन्मुखचन्द्रविनिर्गतैर्गोभिर्निर्वाणोपतापः स्वामिनः कियानर्धविभागः सर्वमेव भवदीयमेवेत्युक्त्वा पटीं न्युञ्छनीचक्रे ।

६९ अन्यदा यतिदानावसरे मिथो मुनिजनसंमर्दात् श्रीमदनुपमायाः प्रणमत्याः प्राज्याज्यसंपूर्णं घृतपात्रं पृष्टे पतितमालोक्य कुपितं तेजःपालमन्त्रिणमिति सान्त्वितवती, यत्तव स्वामिनः प्रसादात्मुनिजनपुण्यपात्रपतितैराज्यैरङ्गाभ्यङ्गो भवतीति तत्पूणदानविधिचमत्कृतो मन्त्री पञ्चाङ्गप्रसादपूर्वं—

४९) *दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
त्यागसहितं च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥

इति युक्तोक्तिपूर्वं च तां मन्त्री प्रशशंस । इत्यनेकधा दानावदातनिकषरेखां प्राप्ता ।

५०) लक्ष्मीश्चला शिवा चण्डी शची सापत्न्यदूषिता ।
गङ्गा न्यग्गामिनी वाणी वाक्साराऽनुपमा ततः ॥

---

१ उम्माणी P २ दर्शनेन a K * बौद्धेन विमलाचार्येण कृतोऽयं श्लोकः प्रश्नोत्तररत्नमालायां वर्तते तस्मान्नारायणेन गृहीत्वा स्वग्रन्थे हितोपदेशे स्थापितः, तस्मादन्येति पूर्वसंपादकः

इत्यादिभिः स्तुतिभिर्जैनाचार्यैः स्तूयते स्म ॥

७० अथान्यदा पञ्चग्रामसङ्ग्रामाधिरूढयोः श्रीवीरधवललवणप्रसादयोः श्रीवीरधवलपत्नी राज्ञी जयतलदेवी सन्धिविधानहेतवे जनकं प्रति श्रीशोभनदेवमुपागता। किं वैधव्याद्भीरुः सन्धिबन्धं कारयसीति तेनाभिहिता। वीरचूडामणेः पत्युः श्रीवीरधवलस्योन्नतिमारोपयन्ती सा पितृकुलविनाशशङ्कया भूयो भूयोऽहमेवं व्याहरामि। तुरगपृष्ठाधिरूढे तस्मिन्वीरधवले स कोऽस्ति सुभटो यस्तत्सम्मुखे स्थास्यतीति व्याहृत्य सामर्षैव प्रतस्थे। अथ तस्मिन्समरसंरम्भे प्रहारव्यथाव्याकुले श्रीवीरधवले भुवस्तलमलंकुर्वति।

५१) यः पञ्चग्रामसङ्ग्रामभूमौ भीमपराक्रमः।
घातैः पपात संजातैरश्वतो न तु गर्वतः॥

इति किञ्चिदन्तर्भग्ने समरसुभटवर्गे एक एवायं पत्तिः पतित इति सकलं निजबलमुत्साहयन् श्रीलवणप्रसादः समस्तानपि रिपून् लीलयैव समूलकाषं कषितवान्। इत्थमेकविंशतिकृत्वः सत्त्वगुणरोचिष्णू रणरसिकतया क्षेत्रे पितुरग्रे पतितः॥

७१ अथ वीरधवलस्यायुःपर्यन्ते, प्रति[1] तीर्थे प्रस्थितेन[2] दत्तमेकधा सहस्रगुणमुपलभ्यत इति रूढेः श्रीतेजःपालेन जन्मसुकृतं ददे। तदनु तस्मिन् स्वामिनि विपन्ने तत्सौभाग्यातिशयात्सेवकानां[3] विंशत्यधिकशतेन[4] सहगमनं चक्रे। तदनु श्रीतेजःपालेन प्रेतवने यामिकान्मुक्त्वा लोकस्य स निर्बन्धो निषिद्धः।

५२) आयान्ति यान्ति च परे ऋतवः क्रमेण
संजातमेतदृतुयुग्ममगत्वरं तु।
वीरेण वीरधवलेन विना जनानां
वर्षा विलोचनयुगे हृदये निदाघः॥

१ प्रतिहारश्री a २ प्रस्थितस्य a K C D ३ जनस्य C ४ अशीत्यधिक M

अथ श्रीमन्त्रिणा वीरधवलस्य सुतो वीसलदेवो राज्येऽभिषिक्तः ।

७२ श्रीअनुपमादेव्या विपत्तौ तेजःपालारूढशोकग्रन्थावनिवर्तमानायां तत्रागतैः श्रीविजयसेनसूरिभिर्बलवत्पुरुषैरुपशमितायां विपदि किञ्चिच्चेतनया सापत्रपः श्रीतेजःपालः सूरिणोचे । वयमस्मिन्नप्यवसरे भवतः कैतवमालोकितुमुपेताः । श्रीवस्तुपालेन किमेतदिति पृष्टा गुरवः प्राहुः । यदस्माभिः शिशोस्तेजःपालस्योपयामाय धरणिगपार्श्वादनुपमा कन्या याचिता तदा स्थिरता कृता । तदनु तस्याः कन्याया एकान्तविरूपतां निशम्य तत्संबन्धभङ्गाय चन्द्रप्रभजिनप्रतिष्ठितक्षेत्राधिपतेरष्टौ द्रम्माणां भोगमुपायनीचक्रे । इदानीं तद्वियोगग्रन्थेरामनस्यमित्युभयोर्वृत्तान्तयोः कस्तथ्य इति तन्मूलसंकेताच्छ्रीतेजःपालः स्वहृदयं दृढीचक्रे ॥

७३ अथान्यदावसरे मन्त्री वस्तुपालः पूर्णायुः श्रीशत्रुञ्जयं यियासुरिति मत्वा पुरोधाः सोमेश्वरदेवस्तत्रागतोऽनर्घ्येष्वप्यासनेषु मुच्यमानेष्वऽनुपविशन् हेतुं पृष्ट इत्याह—

९३) अन्नदानैः पयःपानैर्धर्मस्थानैर्धरातलम् ।
यशसा वस्तुपालेन रुद्धमाकाशमण्डलम् ॥

इति स्थानाभावान्नोपविश्यते इति तदुक्तेरुचितपारितोषिकदानपूर्वं तमापृच्छ्य मन्त्री पथि प्रस्थितः ।

७४ आकेवालीयाग्रामे देशकुट्यां दर्भसंस्तरमारूढो गुरुभिराराधनां कार्यमाण आहारपरिहारपूर्वं पर्यन्ताराधनया प्रध्वंसितकलिमलो युगादिदेवमेवं जपन् ।

९४) सुकृतं न कृतं किञ्चित्सतां संस्मरणोचितम् ।
मनोरथैकसाराणामेवमेव गतं वयः ॥

---

१ ग्रन्थेऽनिवर्तमाने c D H २ आलोकयितुं D ३ स्थिरपत्रदानादनु C H ४ चन्द्रप्रभभिडे a K H M ५ भागमपि याचितीचक्रे a L ६ च भूतलं a

इति वाक्यप्रान्ते नमोऽर्हद्भ्य इत्यक्षरैः समं परिहृत्य[1] सप्तधातुबद्धं शरीरं स्वकृतफलमुपभोक्तुं स्वर्लोकमलंचकार। तत्संस्कारस्थानेऽनुजश्री-तेजःपालसुतजैत्रसिंहाभ्यां श्रीयुगादिदेवदीक्षावस्थामूर्तिनालङ्कृतस्वर्गारोहणप्रासादोऽकारि।

९९) अद्य मे फलवती पितुराशा
मातुराशिषशिखाङ्कुरिताद्य।
यद्युगादिजिनयात्रिकलोकं
प्रीणयाम्यहमशेषमखिन्नः ॥ १ ॥

९६) नृपव्यापारपापेभ्यः सुकृतं स्वीकृतं न यैः।
तान्धूलिधावकेभ्योऽपि मन्येऽधमतरान्नरान् ॥ २ ॥

इत्यादीनि श्रीवस्तुपालमहाकवेः काव्यानि स्वयं कृतान्यमूनि ॥

९७) पूर्णः स्वामिगुणैः स वीरधवलो निर्मान[2] एव प्रभु-
र्विद्वद्भिः कृतभोजराजबिरुदः श्रीवस्तुपालः कविः।
तेजःपाल इति प्रधाननिवहेष्वेकश्च मन्त्रीश्वर-
स्तज्जायानुपमागुणैरनुपमा प्रत्यक्षलक्ष्मीरभूत् ॥

इति श्रीमेरुतुङ्गाचार्यविरचिते प्रबन्धचिन्तामणौ श्रीकुमारपालमन्त्रीश्वरवस्तुपालतेजःपालपर्यन्तमहापुरुषयशोवर्णनो नाम चतुर्थः प्रकाशः ॥

---

१ परिहृत P २ निःसीमः C

श्रीः

# प्रबन्धचिन्तामणिः।

## पञ्चमः प्रकाशः

### प्रकीर्णकप्रबन्धाः।

अथ पूर्वोक्तेभ्यो महापुरुषचरितेभ्यो यान्यवशिष्टानि तानि तदितराणि चेह प्रकीर्णकप्रबन्धे प्रारभ्यन्ते। तद्यथा—

१ समीपस्फुरच्छिप्राश्रवन्त्यामवन्त्यां पुरि पुरा श्रीविक्रमार्कनृपः, सत्रागारे वैदेशिकं लोकं भोजनानन्तरं निद्रापरं संपन्नदीर्घनिद्रमाकर्ण्य विस्मयस्मेरमानसस्तद्वृत्तान्तं जिज्ञासुस्तान् सर्वानपि वसनपिहितान्विधाप्य तद्वार्तां चापन्हुतां निजाज्ञया विधाय पुनरुपागतानध्वगांस्तथैव भोजयित्वा प्रदोषे चोष्णोदकं तैलं च तेषां चरणपरिचरणनिमित्तमुपनीय तेषु तेषु प्रसुप्तेषु महानिशायां कृपाणपाणिर्नृपतिर्निभृतीभूय स्वयं यावत्तस्थौ तावदकस्मात्तत्र कोणैकदेशे प्रथमं तावद्धूमोद्गमं तदनु शिखारेखामथ दीप्तफणारत्नप्रभालङ्कृतं सहस्रफणं नागं निर्गतमवलोक्य तच्चित्रचमत्कृतो राजा यावत्साकूतं पश्यति तावत्स फणीन्द्रः किं पात्रमिति तद्दिनसुप्तान् पान्थान् प्रत्येकं प्रपच्छ। अथ ते धर्मपात्रं गुणपात्रं तपःपात्रं रूपपात्रं कामपात्रं कीर्तिपात्रमित्यादीनि वदन्तोऽज्ञानतया यदृच्छया तस्य शापान्मृत्युमश्नुवन्तीति विलोक्याऽथ श्रीविक्रम एव तत्पुरोभूय योजिताञ्जलिः—

१) भोगीन्द्र बहुधा पात्रं गुणयोगाद्भवेद्भुवि।
मनःपात्रं तु परमं शुद्धं श्रद्धार्पवित्रितम्॥

१ श्रीवत्यां a २ रत्नफणा P ३ सहस्रफणालंकृतं सहस्रफणं P ४ शुद्धश्रद्धा a

अथ निजाशयमेवं भाषमाणं श्रीविक्रमं परितोषाद्वरं वृणीष्वेति प्राह। अथ श्रीविक्रमोऽमून् पथिकानुज्जीवयेति तेन वरे याचिते शेषं विशेषात्परितोषयामास। इति श्रीविक्रमार्कस्य पात्रपरीक्षाप्रबन्धः ॥

२ अथ कदाचित्पाटलीपुरपत्तनेऽकस्मादमन्दानन्दे नन्दे राज्ञि पञ्चत्वमागते कश्चिद्विप्रस्तत्कालं तदागतः परपुरप्रवेशविद्यया नृपदेहमधितस्थौ। तत्संकेततो[1] द्वितीयो द्विजो नृपद्वारमुपेत्य वेदोद्गारमुदाहरत् प्रत्युज्जीवितो स नृपः कोशाध्यक्षैस्तस्मै स्वर्णलक्षमदापयत्। अथ तद्वृत्तान्तं विज्ञाय महामात्यो, नन्दः पुरा कदर्योऽभूत् साम्प्रतं तु तदौदार्यमिति वदंस्तं विप्रं विधृत्य परकायप्रवेशकारिणं वैदेशिकं सर्वत्र शोधयन् क्वापि मृतकं केनापि रक्ष्यमाणमाकर्ण्य चिताप्रवेशाद्भस्मीकृत्य पूर्वमिव तं नन्दं निरुपममतिवैभवान्निजे प्राज्ये साम्राज्ये निर्वाहयामास। इति नन्दप्रबन्धः ॥*

३ अथ खेडै[2]महास्थाने देवादित्यविप्रपुत्री बालकाले विधवा निरुपमरूपपात्रं सुभगाभिधाना प्रातः सूर्यं प्रत्यर्घाञ्जलिं क्षिपन्ती अज्ञाततद्भोगादाधानमभूत्कथंचित्तदसमञ्जसं पितृभ्यामवबुध्य मन्दाक्षमुद्रमिति तां प्रति तद्व्याहृत्य स्वपुरुषैर्वलभ्या नगर्या अभ्यासे मुमुचे। तया तत्र प्रसूतः सूनुः क्रमेण वर्धमानः सवयोभिः शिशुभिः निःपितृक इति निर्भर्त्स्यमानो मातुः समीपे पितरं पृच्छन् तया न जाने इत्यभिहितस्तज्जन्मवैराग्यान्मुमूर्षोः[3] प्रत्यक्षीभूय सविता सान्त्वनापूर्वं करे कर्करान्[4]समर्प्य भवन्मातुः सम्पर्ककारिणमर्कं स्वं ज्ञापयन् भवतः पराभवकारिणं प्रत्ययं क्षिप्तः शिलारूपो भविष्यतीत्यादिश्य निरपराधस्य कस्यापि क्षिप्तो यदि तवैवाऽनर्थनिबन्धनं ज्ञापयंस्तिरोधत्त। अथेत्थममिभवकारिणः कांश्चिद्व्यापादयन् शिलादित्य इति सान्वयनाम्ना प्रतीतः। तन्नगरराज्ञा तत्परीक्षायैव तथाकृते तमिलापालं शिलया तया कालधर्ममवापय्य स्वयमेव

१ तत्संकेतात् द्वितीयदिने c M * कथासरित्सागरे संपूर्णा कथास्ति
२ खेडा H c M ३ मूर्खो मुमूर्षुः H c ४ तत्करं कर्करं c तत्करे D

भूपतिरभूत् । तथा स सवितृप्रसादीकृतहयेऽधिरूढो नभश्चर इव स्वैरविहारी पराक्रमाक्रान्तदिग्वलयश्चिरं राज्यं कुर्वन् जैनमुनिसंसर्गात्प्रादुर्भूतसम्यक्त्वरत्नः श्रीशत्रुञ्जयस्य महातीर्थस्यामानमहिमानमवगम्य जीर्णोद्धारं चकार ।

४ कदाचिच्छिलादित्यं सभापतीकृत्य चतुरङ्गसभायां पराजितेन देशत्यागिना[1] भाव्यमिति पणबन्धपूर्वं सिताम्बरसौगतयोर्वादे संजायमाने पराजितान् सिताम्बरान्स्वविषयात्सर्वान्निर्वास्य श्रीशिलादित्यजामेयम[2]मेयगुणं मल्लनामानं क्षुल्लकं तत्र स्थितं समुपेक्ष्य स्वयं जितकाशिनः[3] श्रीविमलगिरौ श्रीमूलनायकं श्रीयुगादिदेवं बुद्धरूपेण पूजयन्तो बौद्धा यावद्विजयिनस्तिष्ठन्ति तावत्स मल्लः क्षत्रकुलोद्भवत्वात्तस्य वैरस्याविस्मरन् कृतप्रचिकीर्षुर्जैनदर्शनाभावात्तेषामेव सन्निधावधीयन्रात्रिन्दिवं तल्लीनचित्तः कदाचिद्[4]ग्रीष्मवासरेषु निशीथकाले निद्रामुद्रितलोचने समस्तनागरिकलोके दिवाभ्यस्तं शास्त्रं महताभियोगेनानुस्मरन् तत्कालं गगने संचरन्त्या श्रीभारत्या के मिष्टा इति शब्दं पृष्टः स परितो वक्तारमनवलोक्य वल्ला इति तां प्रति प्रतिवचनं प्रतिपाद्य पुनः षण्मासान्ते तस्मिन्नेवावसरे प्रत्यावृत्तया देव्या केन सहेति भूयोऽभिहितस्तदा त्वनुस्मृतपूर्ववाक् गुडघृतेनेति प्रत्युत्तरं ददानस्तदवधानचमत्कृतयाभिमतं वरं वृणीष्वेत्यादिष्टः सौगतपराजयाय कमपि प्रमाणग्रन्थं प्रसादीकुरु इत्यर्थमभ्यर्थयन् नयचक्रग्रन्थार्पणेनानुजग्रहे । अथ देविप्रसादादवगततत्त्वैः[6] श्रीशिलादित्यमनुज्ञाप्य सौगतमठेषु तृणोदकप्रक्षेपपूर्वं नृपतिसभायां पूर्वोदितपणबन्धपूर्वकं कण्ठपीठावतीर्णश्रीवाग्देवताबलेन श्रीमल्लस्तांस्तरसैव निरुत्तरीचकार । अथ राजाज्ञया सौगतेषु देशाद्गतेषु[7] जैनाचार्येष्वाहूतेषु स मल्लो बौद्धेषु जितेषु तेषु वादीति । तदनु भूपाभ्यर्थितैर्गुरुभिस्तस्मै पारितोषिके सूरिपदं ददे । स श्रीमल्लवादिसूरिनामा गणभृत्प्रमा-

---

१ देशताडितेन a c २ यामेयं भागिनेयं c M ३ जितकासिनः a ४ भीष्म-ग्रीष्म K ५ अनिमित्त A ६ प्रसादतस्तदैवावगततत्त्वः c ७ देशोद्गतेषु cD वादिषु c

वक्तया नवाङ्गवृत्तिकारश्रीअभयदेवसूरिभिः प्रकटीकृतश्रीस्तम्भनकस्य तीर्थस्य विशेषोन्नत्यै श्रीसङ्घेन चिन्तायिकत्वे नियोजितः । **इति मल्लवादिप्रबन्धः***

९ अथ मरुमण्डले पल्लीग्रामे काकूपाताकौ भ्रातरौ निवसतस्तयोः कनीयान्धनवान् ज्यायांस्तु तद्गृहभृत्यवृत्त्या वर्तते । कस्मिंश्चिन्निशीथसमये दिवसकर्मवृत्तिश्रान्तः प्रावृट्काले काकूः[2] प्रसुप्तः कनीयसाभिदधे । भ्रातः स्वकीयकेदाराः पयःपूरैः स्फुटितसेतवस्तव तु निश्चिन्ततेत्युपालब्धः स तदा त्यक्तश्रस्तरः स्वं निन्दन् कुद्दालं स्कन्धे निवेश्य यावत्तत्र याति, तावत्कर्मकरान् स्फुटितसेतुबन्धरचनापरान्समालोक्य के यूयमिति पृष्टा भवद्भ्रातुः कामुका इत्यभिहिते, क्वापि मदीयाः कामुकाः सन्तीति पृष्टे वलभ्यां सन्तीति ते प्राहुः । अथ सोऽप्यवसरे सर्वस्वं पिठरे आरोप्य[3] तं मूर्ध्नि दधानःश्रीवलभीमवाप्य गोपुरसमीपवर्तिनामाभीराणां समीपेऽवसत्[4] । अत्यन्तकृशतया तै रङ्क इति दत्ताभिधानस्तार्णमुटजं विधाय तदवष्टम्भेन यावत्तस्थौ, तावत्कश्चित्कार्पटिकः कल्पपुस्तकप्रमाणेन रैवतकशैलादलाबुना सिद्धरसमादाय मार्गमतिक्रामन् काकूयतुम्बडीत्यशरीरिणीं[5] वाणीमाकर्ण्य विस्मयस्मेरमना जातभीर्वलभीपरिसरे तस्य छद्मनो वणिजः सद्मनि रङ्क इति तन्नामतो निःशङ्कतया तत्सरसमलाबु तत्रोपनिधीचक्रे । स स्वयं श्रीसोमेश्वरयात्रायां गतः । कस्मिन्नपि पर्वणि पाकविशेषाय चुल्हीनियोजितायां तापिकायामलाबुरन्ध्राद्गलितरसाबिन्दुना हिरण्मयीं तां निभाल्य स वणिग् तं सिद्धरसं चेतसा निर्णीय तदलाबुसहितगृहसर्वस्वमन्यत्र नियोज्य स्वगृहं प्रदीपकेन भस्मीकृत्य परस्मिन् गोपुरे सौधं निर्माप्य तत्र निवसन्, कदाचित्साज्याज्यविक्रयकारिण्याः[6] स स्वयं घृतं

१ नवाङ्गवृत्तिकारश्चाभयः देवसूरिभिः प्रगटीकृतः श्री C

* मल्लवादिप्रबन्धः प्रभावकचरिते चतुर्विंशति प्रबन्धे च वर्तते ।

२ काकूआकः a D ३ अथ सोपि सर्वस्वमारोपितं H ४ सन्निधौ निवसन् C

५ काकतुम्बडीति सिद्धरसात् C ६ कारिणा C

तोलयंस्तदक्षयं निरीक्ष्य घृतपात्राधः कृष्णचित्रककुण्डलिकां विमृश्य केनापि कैतवेन तद्व्यत्ययादपहृत्य चित्रकसिद्धिं स्वीचकार । कदाचित्तस्यागण्यपुण्यवैभववशात्सुवर्णपुरुषसिद्धिरजायत । इत्थं त्रिविधसिद्ध्या कोटिसंख्याभिधानानि धनानि संगृह्यापि कदर्यवर्यतया क्वापि सत्पात्रे तीर्थे वानुकम्पया वा तस्याः श्रियो न्यासो दूरे तिष्ठतु प्रत्युत सकललोकसंजिहीर्षया तां लक्ष्मीं सकलस्य विश्वस्य कालरात्रिरूपामदर्शयत् । अथ स्वसुताया रत्नखचितकङ्कतिकायां, राज्ञा स्वसुतायाः कृते प्रसभमपहृतायां तद्विरोधानुरोधात्स्वयं म्लेच्छमण्डले गत्वा वलभीभङ्गाय तद्याचितकाञ्चनकोटीरस्मै समर्प्य प्रयाणमचीकरत् । तदनुपकृतस्तु, एकः छत्रधरः निशाशेषे सुप्तजाग्रदवस्थेऽवनीपतौ पूर्वसंकेतितेन केनापि पुंसा सममित्यालापमकरोत । अस्मत्स्वामिनां मन्त्रेऽमूर्खः कोऽपि नहि यदयमश्वपतिमहीमहेन्द्रः केनाप्यज्ञातकुलशीलेनासाधुना साधुना वापि वणिजा नामकर्मभ्यां रङ्केन प्रेरितः सूर्यपुत्रं शिलादित्यं प्रति यश्चचालेति पथ्यां तथ्यां तद्वाचमाकर्ण्य किञ्चिच्चेतसि विचिन्तयन् तस्मिन्नहनि नृपः प्रयाणविलम्बमकरोत् । अथ रङ्कः साशङ्कस्तद्वृत्तान्तं निपुणवृत्त्यावगम्य काञ्चनदानेन तस्य काञ्चनतृप्तिमासूत्र्य पुनः परस्मिन्प्रत्यूषे विचार्याविचार्य वा कृतप्रयाणोऽयं महानरेन्द्रश्चलितः । सिंहस्यैकपदं यथेति न्यायाच्चलित एव राजते । यतः—

१) मृगेन्द्रं वा मृगारिं वा हरिं व्याहरतां जनैः ।
तस्य चोभयथा व्रीडा लीलादलितदन्तिनः ॥

इत्यस्य स्वामिनो निःसीमपराक्रमस्य सम्मुखे कः स्थास्यतीति तद्गिरा प्रोत्साहवान् म्लेच्छपतिर्भेरीनिनादबधिरितरोदःकन्दरं प्रयाण-

१ अक्षीणं c २ कङ्कतिकायां स्वसुताकृते प्रसभमुपहतायां c ३ तद्याचिताः काञ्चनकोटीस्तस्य नृपकोटीरस्य H b ४ एकच्छत्रधरो a ५ निशासौधे सुप्तजाग्रदवस्थे पृथिवीपतौ c ६ मुषकोपि नहि b D H ७ जनाः L D

मकरोत्। इतश्च तस्मिन्वासरे वलभ्यां श्रीचन्द्रप्रभाबिम्बमम्बाक्षेत्रपालाभ्यां सहितमधिष्टातृबलाद्गगनमार्गेण शिवपत्तनभुवि भूषणीबभूव। रथाधिरूढा श्रीवर्धमानप्रतिमा चादृष्टवृत्त्याधिष्ठातृबलेन संचरन्ती आश्विनपूर्णिमायां श्रीमालपुरमलंचकार। अन्या अपि सातिशया देवमूर्तयो यथोचितं भूभागमलंचक्रुः। तत्पुर्देवतया च श्रीवर्धमानसूरीणां चोत्पातज्ञापनावसरे—

२) का त्वं सुन्दरि जल्प देविसदृशे[1] किं कारणं रोदिषि
भङ्गं श्रीवलभीपुरस्य भगवन् पश्याम्यहं प्रत्ययम्[2]।
भिक्षायां रुधिरं भविष्यति पयो लब्धं भवत्साधुभिः
स्थातव्यं मुनिभिस्तदेव रुधिरं यस्मिन्पयो जायते॥

एवमुत्पातेषु संजायमानेषु, पुरीपरिसरप्रान्तेषु म्लेच्छसैन्येषु, देशभङ्गसमासादितपङ्केन रङ्केन पञ्चशब्दवादकान् कनकवितरणैर्बहुधा विभेद्य[3] तस्य हयस्यारोहणकाल एव तैः क्रियमाणे प्रतिशब्दसांराविणे, तार्क्ष्यवदुड्डीय तस्मिंस्तार्क्ष्ये दिवमुत्पतति किं कर्तव्यतामूढः स शिलादित्यस्तैर्निजघ्ने। तदनु तैर्लीलयैव वलभीभङ्गः सूत्रितः॥

३) *पणसयरीवासाइं[4] तिन्निसयाइं अइक्कमे ऊण।
विक्कमकालाउ तउ वलहीभङ्गो समुप्पन्नो॥

इति श्रीशिलादित्यराज्ञ उत्पत्तिस्तथा रङ्कोत्पत्तिस्[5]तत्कृतो वलभीभङ्गश्चेति प्रबन्धत्रयम्[6]।

६ अथ श्रीरत्नमालनगरे श्रीरत्नशेखरो नाम राजा स कदाचिद्दि-

१ देवसदृशे c D २ प्रत्ययः a ३ विबोध्य D * जिनप्रभसूरिकृततीर्थकल्पे सत्यपुरकल्पे प. ३७ तु। तेण सन्नेण विक्कमाउ अठहिं सएहिं पणयालेहिं वरिसाणं गएहिं भञ्जिऊण सो राया मारिउ। गउ सठ्ठाणं हम्मीरो। तउ अन्नो गज्जणवई गुज्जरं भञ्जित्ता तवो वलन्तो पत्तो सच्चउरे [ तेन सैन्येन विक्रमात् अष्टभिः शतैः पञ्चाशद्भिः वर्षाणां गतैः [ वलभी ] भङ्क्त्वा स राजा मारितः गतः स्वस्थानं हम्मीरः। ततोऽन्यः गज्जणपतिः गूर्जरं भङ्क्त्वा ततो वलन् प्राप्तः सत्यपुरे )
४ वाससयं a ५ व्यवहारिकाकृत्पत्तिः D ६ समाप्तिमफणीत् c

ग्यात्रायाः प्रत्यावृत्तः पुरप्रवेशमहोत्सवे विपणिश्रेणिं शृङ्गारितां मृगयमाणः कस्मिन्नपि हट्टे काष्ठपात्रीयुतं कुद्दालमालोक्य सौधप्रवेशानन्तरं प्राभृतपाणौ महाजने समायाते, सुखिनो यूयमिति नृपालापानन्तरं तैर्न सुखिनो वयमिति विज्ञप्ते विश्रमभ्रान्तस्तान्विसृज्य कस्मिन्नपि निर्जनावसरे पुरप्रधानानाहूय किं न सुखिनो यूयमिति पृष्टे अपि च काष्टपात्रीयुतकुद्दालस्योर्ध्वीकरणकारणमनुयुक्तास्ते इति विज्ञपयामासुः ।

यत्र स्वामिना काष्टपात्र्यामेकमेवमवधारितं, स वित्तेश्वरः स्ववित्तसंख्यामजानन् काष्टपात्रिकैः स्ववित्तसंकलनां ज्ञापयितुं संकेतश्चक्रे । तथा च न सुखिनो वयमिति स्वामिनः संतानाभावात् । कोटीध्वजकुलाकुलं नगरमिदं स्वामिना चिरकाललालितमन्वयाभावात्केन परांकोटीं नीयत इति पुरातनस्यान्तःपुरस्य वन्ध्यत्वं बुद्ध्या निर्ध्याय नृपवंशवृद्धये नौतनमन्तःपुरं चिकीर्षवः स्वामिनोऽनुमत्या पुष्यार्कदिने केनापि प्रधानशाकुनिकेन समं शकुनागारं प्राप्ताः । कामपि दुर्गतानितम्बिनीमासन्नप्रसवां काष्टभारवाहनैकवृत्तिं शिरोधिरूढदुर्गामालोक्य शकुनवित्ताम-क्षतादिभिः पुनरभ्यर्चयन्, तैः किमेतदिति पृष्टे प्राह । यः कश्चिदाधाने पुत्रः स एवात्र नृपो भावी चेद्बृहस्पतिमतं प्रमाणमित्यसंभाव्यं वृत्तान्तमनुमन्यमानाः मानोन्नतायै नृपाय व्याघुटय यथावस्थितं तत्स्वरूपं निवेदितवन्तः । अथ खेदमेदुरमना नृप आप्तपुरुषैस्तां गर्तापूरीकर्तुं प्रारभ्यमाणामिष्टं दैवतं स्मरेत्यभिहिते सा मरणभयव्याकुला प्रदोषकाले यावत्ताननुज्ञाप्य शङ्काभङ्गं कुरुते तावत्सा प्रासूत पुत्रं । तं तत्र परित्यज्य पुनरुपागतां गर्तापूरीकृत्य पुनरपि राज्ञे विज्ञपयांचक्रुः । अथ काचिन्मृगी संध्याद्वयेऽपि पयःपानं कारयन्ती तमनुदिनं वृद्धिमन्तं कारयामास । तस्मिन्नवसरे देव्या महालक्ष्म्याः पुरतः टङ्कशालायां हरिण्याश्चतुर्णां

१ तावद्विसृज्य P २ अर्च्यजनावसाने a ३ पात्र्यादिकं H D b K ४ निधाय P ५ नौतनं पुरं a ६ अभ्यचर्यत a c ७ मानोन्नतये P ८ टङ्कशालायाः c

पादानामधः शिशुरूपं नाणकं नूतनं संजायमानमाकर्ण्य क्वचिन्नवीनो नृप उत्पन्न इति प्रसृतवार्तया श्रीरत्नशेखरः सैन्यानि प्रतिदिशं तं शिशुं विशसितुं प्राहिणोत् । तैर्यत्र तत्रावलोक्य लब्धोऽपि बालहत्याभीतैः स सायं पुरगोपुरे गोकुलखुररवैर्यथायं बालो विपन्नः सन्स्वयमपवादाय न भवतीति दूरस्थैस्तैर्यावन्मुक्तस्तावत्तत्रायातं गोकुलं तं मूर्तिमन्तं पुण्यपुञ्जमिव बालमालोक्य तैरेव पदैः स्तम्भितमिव तस्थौ । अथ पाश्चात्यपक्षात्पुरोभूय वृषभो वृषभासुरं तं शिशुं पदानामन्तराले निधाय गोधनं सकलमपि प्रेरयामास । अथ तं वृत्तान्तं नृपोऽवधार्य तैः सामन्तनगरलोकैर्विज्ञप्तश्च[3] तं बालमानीय पुत्रीयमाणः श्रीपुञ्ज इति दत्ताभिधानः प्रवर्धयामास ।

७ अथ श्रीरत्नशेखरे राज्ञि दिवं गते तस्य राज्ञः कृताभिषेकस्य साम्राज्यं पालयतः पुत्री समजनि सा च संपूर्णसर्वाङ्गावयवसुन्दरापि कपिमुखी, तेन वैराग्येण विषयविमुखतां बिभ्राणा श्रीमातेति नामधेयं बभार । सा कदाचिज्जातजातिस्मृतिः पितुरग्रे स्वं पूर्वभवं निवेदितवती, यदहमर्बुदाद्रौ पुरा कपिपत्नीत्वमनुभवन्ती कस्यापि शाखिन एकस्याः शाखायाः शाखान्तरं संचरन्ती केनापि तदतुल्येन शिल्पेन[2] विद्धतालुः पञ्चत्वमासदम् । तदधोवर्तिनि कामिततीर्थकुण्डे[3] यावद्गलितं[4] वपुः पपात तावत्तीर्थातिशयान्मामकं वपुर्मानुषाकारमभवत् यन्मस्तकं तु तत्तथैवास्ते तेनाहं कपिवदना । अथ श्रीपुञ्जनृपस्तस्यास्तन्मस्तकं कुण्डे क्षेपयितुं निजान्पुरुषान्[5]समादिदेश । तैस्तु सुचिरात्तत्तदवस्थं[6] विलोक्य तथाकृते सा श्रीमाता मानवानना समजनि । ततःप्रभृति सा मातरपितरावनुज्ञाप्याऽर्बुदसंख्यगुणा तस्मिन्नेवार्बुदे तपस्यन्ती, कदाचिद्गगनगामिना योगिना ददृशे । स च तत्सौन्दर्यापहृतहृदयो गगनादुत्तीर्य प्रेमालापपूर्वकं त्वं

१ समं तमपरेतं P २ शल्येन H ३ एतादृशकुण्डस्य कथाकोषेऽपि वर्णनमस्ति ४ गलित्वा a ५ आप्तपुरुषान् a b H K ६ तत्र च तदवस्थं c

मां कथं न वृणोषीति पप्रच्छ[1] । सेत्यवादीत् । साम्प्रतं तावत्क्षणदायाः प्रथमयामो व्यतीतस्तूर्ययामस्य ताम्रचूडेषु रुतमकुर्वाणेषु यद्यस्मिन्नगे कयाचिद्विद्यया द्वादश पद्याः[2] कारयसि ततो भवन्तमभीष्टं करोमीति तदुक्तिसमनन्तरमेव तत्र कर्माणि चेटकपेटकं नियोज्य यामद्वयेन निर्मापिते सर्वपद्यानिवहे श्रीमाता स्वशक्तिवैभवेन कृतकं ताम्रचूडारवं कारयन्ती तेनागत्य विवाहाय सज्जीभवेत्यभिदधे । तव पद्याया निष्पाद्यमानायाः कुक्कुटरवः समजनिष्टेति तयोक्ते भवन्मायया कृतकं कृकवाकुरवं को न वेत्तीत्युत्तरं ददानः सरित्तीरे तज्जाम्योपढौकितविवाहोपहारः, श्रीमात्रा समस्तविद्यामूलं तत्त्रिशूलमिहैव विहाय पाणिपीडनाय सन्निहितो भवेत्याहूय, प्रेमापहृतचित्ततया तत्तथा कृत्वा सामीप्यमुपागतः तत्पदयोः कृतकान् शुनो नियोज्य तद्धृदये तेन त्रिशूलेनाहत्य मारितः । इत्थं निःसीमशीललीलायितेन स्वजन्मातिवाहितवती । तस्यामखण्डशीलायां व्यतीतायां श्रीपुञ्जराजा तत्र शिखरबन्धरहितं प्रासादमकारयत् । यतः षण्मासान्ते तस्य गिरेरधोभागवर्ती अर्बुदनामा नागो यदा चलति तदा पर्वतकम्पो भवति । अतः शिखररहितास्तत्र सर्वेऽपि प्रासादाः ।

**इति श्रीपुञ्जराजा तत्पुत्रीश्रीमाता तत्प्रबन्धः ।**

८ कदाचिच्चौडदेशे गोवर्धनो नाम राजाभूत् तदायःस्तम्भे निबद्धा[3] सभामण्डपपुरतो न्यायिना हन्यमाना न्यायघण्टा निनदति । अन्यदा तस्यैकसूनोः कुमारेण रथारूढेन पथि संचरताज्ञानवृत्त्या कश्चिद्वत्सतरो व्यापादितस्तन्माता सौरभेयी नयनाभ्यामजस्रमश्रूणि वर्षन्ती स्वपराभवप्रतीकाराय शृङ्गाग्रेण न्यायघण्टामवीवदत्तद्घण्टाटङ्कारं नृपो निशम्यार्जुनकीर्तिस्तमर्जुनीवृत्तान्तं मूलतोऽवगम्य निजं न्यायं परां कोटिमारोपयितुं प्रातःस्वयं स्यन्दने निविश्य प्रियपुत्रोऽपि तमेकमेव पुत्रं पथि नियोज्य तदुपरि तां धेनुं साक्षात्कृत्य रथं भ्रामयामास । तस्य भूभुजः

१ पृष्टा a २ पद्यां हृद्यां b H ३ स्तम्भनिबद्धा c

सत्वेन तस्य सुतस्य भूयसा भाग्यवैभवेन रथस्य रथाङ्गे समुद्धृते स कुमारो न विपन्नः। इति **गोवर्धननृपप्रबन्धः*** ॥

९ अथ कान्त्यां पुरि पुरा पुराणनृपतिश्चिरं राज्यं निर्गर्वः कुर्वन् कदाचिन्मतिसागराभिधानेन प्रियसुहृदा महामात्येनाऽनुगम्यमानो राजपाटिकायां व्रजन् विपर्यस्ताभ्यस्तेन[1] तुरङ्गेण नृपेऽपह्रियमाणे, चतुरङ्गचमूचक्रे क्रमेण दवीयसि संजायमानेऽप्यतिजवे जवनेऽधिरूढः तदानुपदिकः कियत्यपि भूभागे उल्लङ्घिते सति मार्गोल्लङ्घनपरिश्रमादत्यन्तसुकुमारतया रुधिरपूरितत्वाद्विपन्ने नृपतौ, कृतानन्तरकृत्यस्तुरङ्गमं तद्वेषं च सहादाय प्रदोषसमये पुरं प्रविशन् राज्यस्यानुसन्धानचिकीः श्रीमाल[2]भूपालभयात्कमपि नृपतेः सवयसं सरूपं च कुलालमालोक्य तं तद्वेषार्पणपूर्वकं तुरगेऽधिरोप्य सौधप्रवेशानन्तरं देव्यै तं व्यतिकरं निवेद्य सचिवेन पुण्यसार इति नाम विधाय स एव नृपतीचक्रे। इत्थं कियत्यपि गते काले स सचिवश्चमूसमूहवृतः प्रतिनृपतिं प्रति प्रतिष्ठासुः स्वप्रतिहस्तकप्रायं कमपि प्रधानपुरुषं नृपतिसेवाकृते निवेद्य स्वयं देशान्तरविहारमकरोत्। अथ स पृथिवीपतिर्निरङ्कुशो वश्यापतिरिव[3] स्वैरविहारी तदनन्तरं पुरकुम्भकारान्समस्तानाहूय मृन्मयान् हयान् करिकलभकरभादींश्च निर्माय तैःसमं चिरं चिक्रीड। एवं स्थिते समस्तराजलोकस्यावहेलनां नृपतेर्निशम्य ततःस्कन्धावारात् सचिवोऽल्पपरिच्छदो नृपमुपेत्येत्यवादीत्। यस्त्वमिदानीमेव विस्मृतकारुभावः स्वभावचलाचलतया[4] यदि कामपि मर्यादां न मन्यसे तदा त्वां निर्विषयीकृत्य कमप्यपरं कुलालबालं भूपालं करिष्यामीति तदुक्तिक्रुद्धः स नृपः सभायामुपांशुभूमौ कोऽत्र भोः, इति व्याहृतिसमनन्तरमेव सजीवभूतैश्चित्रपदातिभिः स सचिवः सन्दानितः।

---

* अयं गोवर्धननृपप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना स्वपुस्तके लिखितम् १ विपर्यस्तध्वस्तेन a P विपर्यस्तायस्तेन b c २ सीमाल L ३ वशापतिरिव H b वेश्यापतिरिव P ४ बलाबलतया a

तदसंभाव्यं महदाश्चर्यं[1] विमृश्य तत्प्रभुप्रभावाविर्भावचमत्कृतचित्तस्तत्पदयोर्निपत्य स्वं मोचयितुमत्यर्थं समभ्यर्थयन् नृपेण तथा कारिते स सभक्तिकं विज्ञपयामास । भवतः साम्राज्यदाने निमित्तमात्रोऽहं तव प्रभावादालेख्यरूपाणि सचेतनीभूयेत्थं निदेशवशंवदानि भवन्ति तत्र प्राक्कृतान्येव कर्माणि कारणमत एव भवान्पुण्यसार इति सान्वयनामा ॥ **इति पुण्यसारप्रबन्धः*** ।

१० अथ पुरा कुसुमपुरे नन्दिवर्धननामा राजकुमारः छत्रधरेण समं देशान्तरविलोकनकुतर्की पितरावनापृच्छ्य यदृच्छया गच्छन् प्रत्यूषकाले क्वापि पुरे प्राप्तस्तत्राऽपुत्रिणि नृपतौ पञ्चत्वमुपागते सति सचिवैरभिषिक्तः पट्टहस्ती निखिलेऽपि नगरे यदृच्छया बभ्राम । तत्रागतनृपकुमारमासन्नमपि दुःस्वप्नमिव विस्मृत्य परं छत्रधरमभ्यषिञ्चत् । स च तत्प्रधानैर्महता महोत्सवेन पुरं प्रवेश्यमानो राजा कुमारमपि तथैव महत्या प्रतिपत्त्या सह गृहीत्वा सौधं गतः । अहं राजलोकस्वामी त्वं तु ममेत्युचितैरुपचारवचनैस्तमन्तरितमेवमाराराधं[2] । स तु राजा राजगुणानामनर्हो निरवधिदुर्मेधा वर्णाश्रमपालनानभिज्ञो[3] यथायथा प्रजापीडनपरः साम्राज्यं कुरुते तथा तथा पशुपतिमूर्ध्ना विधृतराजेव स कुमारः प्रतिदिनं हीयते । कस्मिन्नप्यवसरे तं तथास्थितं कुमारं स नृपतिस्तत्तनुताहेतुं पृच्छन् दुर्मेधतया प्रजाः पीडयसि तेनात्यन्तमनौचित्येन कृशतामावहामि ।

४) ×वासो जडाण मज्झे दोजीहा सामिसवणपॅडिलग्गा ।
जीविज्जइ[5] तं लाहो झीणित्ते विम्हउं[6] कीस ॥

---

१ प्राक्तनानि c　* पुण्यसारप्रबन्धोयं पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना लिखितम्　२ एव रुरोध c　३ पालनपरिश्रमानभिज्ञः b

× वासो जडानां मध्ये द्विजिव्हाः स्वामिश्रवणप्रतिलग्नाः ।
जीव्यते यत्तत् लाभः क्षीणत्वे विस्मयः कीदृशः ॥

४ भवण a　५ जीवज्जइ जइ c　६ हाणन्ते विहिउ c

इति मया गाथार्थः सत्यापितोऽस्तीति तद्वचनानन्तरं यदस्याःप्रजायाः पापनिरताया अपुण्योदयेनावश्यंभाविपीडनावसरेऽहं नृपतीकृतः। यदि प्रजायाः परिपालनां लोकेशोऽभ्यलिखिष्यत्तदा भवत एव पट्टहस्ती पट्टाभिषेकमकरिष्यदिति तदुक्तियुक्तिभ्यां भेषजाभ्यामिव निगृहीतरुक् स कुमारो वपुःपीवरतां बभार। इति कर्मसारप्रबन्धः*।

११ अथ गौडदेशे लक्षणावत्यां नगर्यां श्रीलक्ष्मणसेनो नाम नृपतिरुमापतिधरसचिवेन सर्वबुद्धिनिधिना चिन्त्यमानराज्यश्रिरं राज्यं चकार। स त्वनेकमत्तमातङ्गसैन्यसङ्गादिव मदान्धतां दधानो मातङ्गीसङ्गपङ्ककलङ्कभाजनमजानि। उमापतिधरस्तु तद्व्यतिकरमवगम्य प्रकृतिक्रूरतया च स्वामिनोऽनालोकनीयतां[1] च विचिन्त्य प्रकारान्तरेण तं बोधयितुं सभामण्डपस्य भारपट्टे गुप्तवृत्त्यामूनि काव्यानि लिलेख॥

५) शैत्यं नाम गुणस्तवैव, तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां [2]व्रजन्त्यशुचयःस्पर्शात्तवैवापरे।
किं चातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः[3]॥ १॥

६) त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि तनुषे हानिर्न हेम्नामपि।
मूर्धन्यं कुरुषे जडांशुमयशः किं नाम लोकत्रयी–
दीपस्याम्बुजबान्धवस्य, जगतामीशोऽसि किं ब्रूमहे[4]॥ २॥

७) छिन्नं ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि
क्षीबः क्रीडति मातृभिर्यदि रतिं धत्ते श्मशाने यदि।

---

* कर्मसारप्रबन्धोऽयं पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना लिखितम्
१ अनाकलनीयतां H २ भवन्ति C ३ प्रश्नोत्तरमालायाः पद्यमिदम् ४ कुवलयानन्दे तथा शोभाकरस्यालंकाररत्नाकरेऽपि पद्यमिदम्

सृष्ट्वा संहरति प्रजां[1] यदि तथाप्याधार्य[2] भक्त्या मन-
स्त्वं सेवे करवाणि किं त्रिजगती शून्या स एवेश्वरः[3] ॥ ३ ॥[4]

८) एतस्मिन्महति प्रदोषसमये राजा त्वमेकस्ततो
लक्ष्मीमम्बुरुहां पिधाय कुमुदे किं नो तनोषि श्रियः ।
यद्ब्राह्मी स्थितिरत्र यच्च सुमनःश्रेणीषु संभावना
त्वं तावत्कतमोऽसि तत्तिरयितुं धातापि नैव क्षमः ॥ ४ ॥

९) सद्वृत्तसद्गुणमहार्ह[5]मनर्घ्यमूल्य—
कान्ताघनस्तनतटोचितचारुमूर्ते ।
आः पामरीकठिनकण्ठविलग्नभग्न
हा हार हारितमहो भवता गुणित्वम् ॥ ५ ॥

कस्मिन्नप्यवसरप्रस्तावे[6] तानि वीक्ष्य तदर्थमवगम्य तस्मिन्नन्तर्द्वेषं दधौ । यतः—

१०) प्रायः संप्रति[7] कोपाय सन्मार्गस्योपदेशनम् ।
विलूननासिकस्येव यद्वदादर्शदर्शनम् ॥

इति न्यायात्सामर्षतया तं पदभ्रष्टं चकार । अथ स नृपतिः कदाचिद्राजपाटिकायाः[8] प्रत्यावृत्तो दुरवस्थमेकाकिनमुपायविधुरं तं वीक्ष्य क्रोधाद्वधाय हस्तिपकेन हस्तिनं प्रेरयामास । स तु निषादिनं प्रति प्राह । यावदहं राज्ञोऽग्रे किञ्चिद्वच्मि तावज्जवान्निवार्यतां गजः । तद्वचनात्तेन तथा कृते, उमापतिधरः प्राह—

११) नम्रस्तिष्ठति धूलिधूसरवपुर्गोपृष्ठिमारोहति
व्यालैः क्रीडति, नृत्यति, स्रवदसृग्चर्मोद्वहन्दन्तिनः[9] ।

१ प्रजां B २ आदाय c ३ तथैव D ४ घोयीकृतमिति शार्ङ्गधरपद्धत्या मुद्धृतमिदं पद्यम् ५ महार्घ्यं H ६ सर्वावसरप्रस्तावे a H C ७ सन्ति प्रकोपाय P ८ राज्यजयपाटिकायाः C ९ उद्वहद्दन्तिनाम् a

आचाराद्बहिरेवमादिचरितैराबद्धरागो हरः[1]
सत्यं[2] नोपदिशन्ति यस्य गुरवस्तस्येदमाचेष्टितम् ॥

इति तद्विज्ञानाङ्कुशेन वशंवदमनोगजो निजचारित्रे किञ्चित्सानुशयः[3] स्वममन्दं निन्दंस्तद्व्यसनं शनैर्निषिध्य तं राजा पुनरेव प्रधानीचकार। **इति लक्ष्मणसेनोमापतिधरयोः प्रबन्धः***

**१२** अथ काशीनगर्यां जयचन्द्र इति नृपः प्राज्यसाम्राज्यलक्ष्मीं पालयन्पङ्गुरिति बिरुदं बभार। यतो यमुनागङ्गायष्टियुगावलम्बनमन्तरेण चमूसमूहव्याकुलिततया क्वापि गन्तुं न प्रभवति। कस्मिन्नप्यवसरे तत्र वास्तव्यस्य कस्यापि शालापतेः पत्नी सूहवनाम्नी सौन्दर्यनिर्जितजगत्त्रय-स्त्रैणा भीष्मग्रीष्मर्तौ जलकेलिं विधाय सुरसरित्तीरे तस्थुषी सा खञ्ज-नाक्षी व्यालमौलिस्थितं खञ्जनं वीक्ष्य तमसंभाव्यं शकुनं कस्यापि द्विज-न्मनः स्नातुमायातस्य पदोर्निपत्य तद्विचारं पप्रच्छ। स निमित्तवित् चेन्मदादेशं सदैव तनुषे तदा तव विचारमहं निवेदयामीति तेनोक्ता तव पितृनिर्विशेषस्य सा मान्यां[4] मयाज्ञा, सदैव मूर्ध्ना तां वहामीति प्रतिज्ञापरायास्तस्याः सप्तमेऽहनि त्वमस्य नृपतेरग्रमहिषी भविष्यसीति, आदिश्य द्वावपि यथागतं जग्मतुः॥ अथ निमित्तविदा निर्णीते वासरे स राजा राजपाटिकायाः प्रत्यावृत्तः क्वापि रथ्यायां नेपथ्यविहीनामपि अगण्यलावण्यपुण्याङ्गीं तां शालापतिबालां विलोक्य स्वचित्तसर्वस्वचौरी-[5] मूरीकृत्याग्रमहिषीं चकार। तदनु तया कृतज्ञतया विप्रप्रतिज्ञां स्मरन्त्या नृपाय तस्मिन् विद्याधरनिमित्ते विज्ञप्ते पटहप्रणादपूर्वं तस्मिन् विद्याधरे आहूयमाने विद्याधराभिधानानां द्विजानां सप्तशतीमागतां विलोक्य तमे-

---

१ राबद्धरागाहरे P २ सन्तो P ३ चरित्रैकवित्सानु P * अयं लक्ष्मणसेनोमापतिधरयोः प्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना लिखितम् ४ सामान्यामाज्ञां सदैव मूर्ध्ना वहामि ।। ५ सर्वस्वं चौरीकृत्य a

कमुपलक्षितं पृथक् कृत्वा शेषेषु यथोचितं सत्कृत्य विसृष्टेषु नृपतिरर्थिते-प्सितं प्रार्थयेति विद्याधरं विपद्विधुरं प्राह । राजादेशप्रमुदितेन तेनाङ्ग-सेवा सदैवास्तु इति प्रार्थिते नृपतिना तथेति प्रतिपन्ने तस्य निरव-धिचातुर्यं पर्यालोच्य सर्वाधिकारभारे धुरंधरो व्यधायि । स च क्रमेण संपन्नसंपन् निजद्वात्रिंशदवरोधपुरन्ध्रीणामनुवासरं जात्यकर्पूरपूराभरणानि कारयन् प्राच्यानि निर्माल्यानीत्यवकरकूपिकायां त्याजयन् साक्षाद्दैवताव-तार इव दिव्यभोगान् भुञ्जानोऽष्टादशसहस्राणां[1] ब्राह्मणानामभिलषिता-भ्यवहारदानादनु स्वयमश्नाति । अथ कदाचिन् नृपतिना वैदेशिकभूप-तिमभिषेणयितुं चतुर्दशविद्याधरो विद्याधरो प्रेषितो[3] देशाद्देशान्तराण्यवगा-हमानः क्वचिदिन्धनविहीने देशे विहितावासस्तेषां विप्राणां पाककाले सूपकाराणां तैलाभ्यक्तवस्त्रदुकूलान्येवेन्धनीकुर्वन् तान्विप्रान् रूढयैव भोज-यामास । अथ प्रतिरिपुं निर्जित्य जितकाशितया व्यावृत्य प्राप्तनिजपुरी-परीसरः पिण्याकाभिलाषात् दुकूलज्वालनेन कुपितं भूपतिमवगम्य स्वं गृहमर्थिभिर्लुण्टाप्य तीर्थोपासनवासनया संचरन् आनुपदिकेन नृपति-नानुनीयमानो मानोन्नततया नृपतेराशये स्वाभिलाषसंभवं निवेद्य कथं-[4]चिदापृच्छ्य निजमवसानमसाधयत् ।

१३ तदनन्तरं सूहवदेव्या निजाङ्गजस्य कृते युवराजपदवीं याचितो नृपः संगृहिणीपुत्रायासद्वंशराज्यं न युज्यते इति बोधिता तं पतिं जिघांसुः म्लेच्छानाहूतवती । अथ स्थानपुरुषाणां समायातविज्ञप्तिकया तं व्यतिकरमवधार्य लब्धपद्मावतीवरप्रसादं सादरं कमपि दिग्वाससं निमित्तं पृष्टवान् । स पद्मावत्याः सप्रत्ययं म्लेच्छागमनिषेधरूपसमादेशं नृपतेर्विज्ञप्तवान् ॥ अथ कियद्दिनानां प्रान्ते तान् सन्निहितानाकर्ण्य स आशाम्बरः किमेतदिति पृष्टस्तस्यामेव निशि नृपतिप्रत्यक्षं पद्मावत्याः

---

१ जङ्घासहस्राणां. a २ संख्यासहस्राणां H c ३ चतुर्दशविद्याधरोऽपि a P ४ कथं कथंचिद् P

पुरो होममारभत ॥ अथ निरवद्याकृष्टिविद्यया होमकुण्डज्वालामालान्तरिता प्रत्यक्षीभूय श्रीपद्मावती तुरुष्कागमनिषेधमुक्तवती ॥ अथ सामर्षः क्षपणकस्तां कर्णयोर्धृत्वा क्रोधानुबन्धात्तेषु सन्निहितेषु किं भवत्यपि वितथं ब्रूते, इति तेनोपालम्भिता सति सैवमवादीत्। त्वं यां पद्मावतीमतीव भक्त्या पृच्छसि सास्मत्प्रतापबलात्पलायांचक्रे। अहं तु म्लेच्छगोत्रजं दैवतं मिथ्याभाषणेन लोकं विश्वास्य म्लेच्छैर्विश्वासं कारयामीत्युदीर्य तस्यां तिरोहितायां, म्लेच्छसैन्येन प्रातर्वाराणसीं वेष्टितां चेष्टया जानन् तद्धनुर्ध्वानैश्चतुर्दशशतीमितनिःस्वानयुग्मनिःस्वनेऽपह्नुते[1] सति प्रबलम्लेच्छकुलव्याकुलीकृतमनास्तं सूहवदेव्या अङ्कजं निजे गजे नियोज्य जाह्नवीजले सगजो ममज्ज। इति जयचन्द्रप्रबन्धः* ॥

१४ अथ जगद्देवनामा क्षत्रियः त्रिविधामपि वीरकोटिरतां बिभ्रत्, श्रीसिद्धचक्रवर्तिना सन्मान्योऽपि तद्गुणमन्त्रवशीकृतेन नृपतिना परमर्दिश्रीपरमर्दिनाहूतः सोपरोधं पृथ्वीपुरन्ध्रीकुन्तलकलापकल्पं कुन्तलमण्डलमवाप्य यावत्तदागमं श्रीपरमर्दिने द्वाःस्थो निवेदयति तावत्तत्सदसि काचिद्विटवनिता विवसना पुष्पचलनकां[2] नृत्यन्ती तत्कालमेवोत्तरीयकमादाय सापत्रपा सा तत्रैव निषसाद ॥ अथ राजदौवारिकप्रवेशिताय श्रीजगद्देवाय सप्रियालापप्रभृति सन्मानदानादनु प्रधानपरिधानं दुकूलं लक्षमूल्यातुल्योद्भटपटयुगं प्रसादीकृत्य तस्मिन् महार्हासननिविष्टे सभासम्भ्रमे भग्ने सति, नृपस्तामेव विटनटीं नृत्यायादिदेश। अथ सा औचित्यप्रपञ्चचञ्चुचातुर्यधुर्या श्रीजगद्देवनामा जगदेकपुरुषः साम्प्रतं समाजगाम तदत्र विवसनाहं जिह्रेमि। स्त्रियः स्त्रीष्वेव यथेष्टं चेष्टन्ते इति तस्या लोकोत्तरया प्रशंसया प्रमुदितमानसस्तं नृपप्रसादीकृतं वसनयुगं तस्यै वितीर्णवान् ॥ अथ श्रीपरमर्दिप्रसादतो देशाधिपत्ये संजाते सति

१ अपन्हुते बले P * अयं जयचन्द्रप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना लिखितम्। २ चलच्चलनका H o D

तद्रुपाध्यायः[1] श्रीजगद्देवस्य मिलनाय समागतः काव्यमिदं प्राभृतीचकार । तद्यथा—

१२)*चक्रः पप्रच्छ पान्थं[2] कथय मम सखे कास्ति किं स प्रदेशो
वस्तुं नो यत्र रात्रिर्भवति भुवि चिरायेति स प्रत्युवाच ।
नीते मेरौ समाप्तिं कनकवितरणैः श्रीजगद्देवनाम्ना
सूर्येऽनन्तर्हितेऽस्मिन्कतिपयदिवसैर्वासराद्वैतसृष्टिः ॥

अस्य काव्यस्य पारितोषिके तस्मै स स्थूललक्ष्यो लक्षार्धं वितताार ॥

१३) क्षोणीरक्षणदक्षदक्षिणभुजे दाक्षिण्यदीक्षागुरौ
श्रेयः सद्मनि धन्यजन्मनि जगद्देवे जगद्दातरि ।
वर्तन्ते विदुषां गृहाः प्रतिदिनं गन्धेभगन्धर्वयो–
रालानद्रुमरज्जुदामघटनाव्यग्रीभवत्किंकराः ॥ १ ॥

१४) त्वयि जीवति जीवन्ति बलिकर्णदधीचयः ।
दारिद्र्यं तु जगद्देव मयि जीवति जीवति ॥ २ ॥

१५) दरिद्रान् सृजतो धातुः कृतार्थान् कुर्वतस्तव ।
जगद्देव न जानीमः कस्य हस्तो विरंस्यति ॥ ३ ॥

१६) जगद्देव जगद्देव प्रासादमधितिष्ठतः ।
स्वयशः शिवलिङ्गस्य नक्षत्रैरक्षतायितम् ॥ ४ ॥

१७) अगाधः पाथोधिः पृथु धरणिपात्रं[3] विभु नभः
समुत्तुङ्गो मेरुः प्रथितमहिमा कैटभारिपुः ।

---

१ झेणभ्रस्तद्रुपाध्यायः a D ऋणग्रस्तस्तद्रुपाध्यायः H

* अक्षत्रक्षतवालिनो भगवतः कस्यापि संगीतक–
व्यासक्तस्य च तस्य कुन्तलपतेः पुण्यानि मन्यामहे
एकः कामदुघामदुग्ध मरुतः सूनोः सुबाहुर्द्वयीं
प्रत्यक्षप्रतिपक्षमार्गण भवानन्यस्य चिन्तामणिः ॥ १ ॥ चक्रः०
a b H आदर्शेषुरत्रेदमधिकं पद्यं   २ पान्थं a   ३ पृथुरवनिपात्रं a H

जगद्देवो वीरः सुरतरुरुदारः सुरसरित्
पवित्रा पीयूषद्युतिरमृतवर्षीति न नवम् ॥ ९ ॥

न नवमिति जगद्देवेनार्पिता समस्या पण्डितेन पूरितेत्यादीनि बहूनि काव्यानि यथाश्रुतं ज्ञातव्यानि ।

१५ अथ श्रीपरमर्दिमेदिनीपतेः पट्टमहादेवी श्रीजगद्देवस्य प्रतिपन्नजामिः । कदाचित् राज्ञा श्रीमालभूपालपराजयाय प्रहितः श्रीजगद्देवः श्रीदेवार्चनं कुर्वन् छलघातिना परबलेन सैन्यं निजमुपद्रुतं शृण्वन् तमेव देवतावसरं न मुमोच । तस्मिन्नवसरे प्रणिधिपुरुषमुखाज्जगद्देवपराजयमश्रुतपूर्वमवधार्य महिषीं श्रीपरमर्दी प्राह । भवद्भ्राता संग्रामवीरनाथतां बिभ्राणोऽपि रिपुभिराक्रान्तः पलायितुमपि न प्रभूष्णुरजनि । इति नृपतेर्मर्माभिघातनर्मोक्तिमाकर्ण्य प्रत्यूषसंध्याकाले सा राज्ञी प्रतीचीदिशमालोकितवती । राज्ञा किमालोकसे इत्यादिष्टे सूर्योदयमिति, 'मुग्धे किं सूर्योदयोऽपरस्यां दिशि जाघटीति,' सा तु 'विरञ्चिप्रपञ्चः प्रतीपः प्रतीच्यामपि प्रद्योतनोदयो दुर्घटोऽपि घटते, परं क्षत्रियदेवजगद्देवस्य भङ्गस्तु नेति' दम्पत्योः प्रियालापः[1] ॥ देवार्चनानन्तरं जगद्देवः पञ्चशत्या सुभटैः समं समुत्थितश्चण्डांशुरिव तमस्काण्डं, केसरिकिशोर इव गजयूथं, वात्यावर्त्त इव घनमण्डलं हेलयैव तद्बलं दलयामास[2] ।

१६ अथ परमर्दिनामा नृपो जगत्युदाहरणीभूतं परमैश्वर्यमनुभवन् निद्रावसरवर्जं रात्रिंदिवं निजौजसा विच्छुरितं छुरिकाभ्यासं विदधानोऽशनावसरे परिवेषणाकुलं प्रतिदिनमेकैकं सूपकारमकृपः कृपाणिकया निघ्नन् षष्ट्यधिकशतत्रयेण भक्तकाराणां वर्षे निषेव्यमाणः कोपकालानल इति बिरुदं बभार ।

१८) आकाश प्रसर प्रसर्पत दिशस्त्वं पृथ्वि पृथ्वी भव
प्रत्यक्षीकृतमादिराजयशसां युष्माभिरुज्जृम्भितम् ।

---

१ प्रियालापे H २ तद्दलयामास P

प्रेक्षध्वं परमर्दिपार्थिवयशोराशेर्विकाशोदया-
द्वीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोहति ॥

इत्यादिभिः स्तुतिभिःस्तूयमानश्चिरं राज्यसुखमनुबभूव ।

१७ स च सपादलक्षक्षितिपतिना श्रीपृथ्वीराजेन सह संजातविग्रहः समराजिरमधिरूढः स्वसैन्ये पराजिते कान्दिशीकः कामपि दिशं गृहीत्वा पलायनपरः स्वराजधानीमाजगाम । अथ तस्य पार्थिवस्यापमानितपूर्वसे[1]वको निर्विषयीकृतः पृथ्वीराजराजसभामुपेतः प्रणामान्ते किं दैवतं पूज्यते परमर्दिपुरे विशेषात्सुकृतिभिरिति स्वामिनादिष्टस्तत्कालोचितं काव्यमिदमपाठीत् ।

१९) मन्दश्चन्द्रकिरीटपूजनरसस्तृष्णा न कृष्णार्चने
स्तब्धः[2] शम्भुनितम्बिनीप्रणतिषु व्यग्रो विधातृग्रहः ।
नाथो नः परमर्दिनेन वदनन्यस्तेन संरक्षितः
पृथ्वीराजनराधिपादिति तृणं तत्पत्तने पूज्यते ॥

इति स्तुतिपरितोषितेनानुजग्राह । स तत्र त्रिःसप्तकृत्वस्त्रासितम्लेछाधिपोऽपि द्वाविंशतितमवेलायां स एव म्लेच्छाधिपतिः पृथ्वीराजराजधानीमुपेत्य निजदुर्धरस्कन्धावारेण समवात्सीत् । त्रासितमक्षिकेव भूयो भूयो रिपुरुपैतीति निजनृपतेररतिं मनोगतामवगम्य प्रभोर्निःसीमप्रसादपात्रं[3] द्वितीयमिवममात्रं तुङ्गनामा क्षात्रं तेजो वहन्सुभटकोटीरः स्वप्रतिबिम्बरूपेण पुत्रेण समं म्लेच्छाधिपतेरनीकं प्रविश्य निशीथसमये तस्य रिपोर्गुरूदरात्परितः खदिराङ्गारधगधगायमानां परिखां निरीक्ष्याङ्गजं जगाद । अस्यां मम प्रविष्टस्य पृष्ठे पदं ददानो म्लेच्छपतिं निगृहाणेति पितुरादेशान्ते कार्यमेतन्ममासाध्यतमं, किं च जीवितकाङ्क्षया वपुर्विपत्तिदर्शनं, तदहमस्यां विशामि भवन्त एव तमन्तं नयन्तु । इत्युक्त्वा तेन तथा कृते, स्वामि-

१ अपमानितसर्वे P अपमानितपूर्वः कोऽपि तत्पूर्वसेवको H　२ स्तब्धा a
३ प्रसादपात्राद्वितीयमिवामात्रं P　४ वपुः a

कार्यं पर्याप्तप्रायं मन्यमानस्तमरातिं लीलया निगृह्य यथागतमाजगाम। विभातभूयिष्ठायां निशि विपन्नं स्वामिनं निरीक्ष्य परसैन्यं पलायांचक्रे। स तुङ्गसुभटस्तुङ्गप्रकृतिर्नृपतेः कदाचिन्न ज्ञापयामास। कस्मिन्नप्यवसरे राजमान्यतया नितान्तपरिचितां तुङ्गपुत्रवधूमवधूतमङ्गलवलयामालोक्य संभ्रमात् पतिना पृच्छ्यमानोऽपि पयोधिरिव गम्भीरतया मौनमर्यादया किमप्यविज्ञपयन् निजशपथदानपूर्वं पृष्टो निजगुणपातकं दुष्करमिति तथापि प्रभोरभ्यर्थनया निवेद्यमानमस्तीत्यभिधाय तद्वृत्तान्तं प्रत्युपकारभीरुर्यथावस्थितं निवेदयामास।

२०) इयमुच्चधियामलौकिकी
महती कापि कठोरचित्तता।
उपकृत्य भवन्ति निःस्पृहाः
परतः प्रत्युपकारशङ्कया॥

इति तुङ्गसुभटप्रबन्धः।

१८ अथ कदाचित्तस्य म्लेच्छपतेः सूनुर्नृपतिः पितुर्वैरस्य स्मरन्, सपादलक्षक्षितिपतिविग्रहकाम्यया सर्वसामग्र्या समुपेतः पृथ्वीनाथस्य नासीरवीरधनुर्धरशरैः प्रावृषेण्यधाराधरधारासारैरिव तस्मिन्ससैन्ये त्रासिते पृथ्वीराजस्तदा तदानुपदिकीभावं भजन्, महानसाधिकृतपञ्चकुलेन विज्ञपितं करभीणां सप्तशत्यापि महानसपरिच्छदः सुखेन नोह्यते ततः[1] कियतीभिः करभीभिः प्रभुः प्रसीदत्विति विज्ञप्तो नृपतिर्म्लेच्छपतिमुच्छेद्य[2] भवदभ्यर्थिताः करभीः प्रसादीकरिष्यामीति तत्संबोध्य पुनः प्रयाणं कुर्वन् सोमेश्वरनाम्ना प्रधानेन भूयो भूयो निषिध्यमानः, तत्पक्षपातभ्रान्त्या नृपतिना निगृहीतकर्णः, तदत्यन्तपराभवात् तस्मिन् प्रभौ सामर्षो म्लेच्छपतिं प्राप्य तदभिभवप्रादुःकरणतस्तान् विश्वस्तान् पृथ्वीराजस्कन्धावारसन्निधौ समानीय पृथ्वीराजराजस्यैकादश्युपवासकृतपारणादनु सुप्तस्य

१ सुखेनोह्यते नातः P २ मुच्छेद्य तदौष्ट्रिकमाछिद्य H

तन्नासीरवीरैः सह समरसंरम्भे म्लेच्छानां जायमाने निर्भरनिद्रायमाणस्तुरुष्कैर्नृपतिर्निबध्यं स्वसौधं नीतः । पुनरप्येकादश्युपवासपारणके नृपतेर्देवार्चनावसरे म्लेच्छराजेन प्रहितं तत्र पात्रीकृतमांसपाकं गुरूदरान्तर्नियुज्य तदैव देवताराधनवैयग्र्ये सति, शुनापह्रियमाणे तस्मिन् पिशिते, किं न रक्षसि यामिकैरित्यभिहितः करभीणां सप्तशत्या दुर्वहं यत्पुरा मम महानसं तत्साम्प्रतं दुर्दैवयोगादीदृशीं दुर्दशां प्राप्तमिति कौतुकाकुलितमानसो विलोकयन्नस्मीति तेनोक्ते, किं काचिदद्यापि त्वय्युत्साहशक्तिरवशिष्यत इति तैर्विज्ञप्ते, यदि स्वस्थाने गन्तुं लभे[1] तदा दर्शयामि वपुःपौरुषमिति यामिकैर्विज्ञप्तो म्लेच्छभूपतिस्तत्साहसंदिदृक्षुस्तदीयां राजधानीमानीय पृथ्वीराजं तत्र राजसौधे यावदभिषेक्ष्यति तावत्तत्र चित्रशालायां शूकरनिवहैर्हन्यमानान् म्लेच्छानालोक्यामुना मर्माभिघातेनात्यन्तपीडितस्तुरुष्कपार्थिवः पृथ्वीराजं कुठारशिरश्छेदपूर्वं संजहार । इति नृपतिपरमर्दिजगद्देवपृथ्वीपतीनां प्रबन्धाः ॥

१९ अथ शतानन्दपुरे परिखीभूतजलधौ श्रीमहानन्दो नाम राजा मदनरेखेति तस्य राज्ञी, अन्तःपुरप्राचुर्यात्[3], पतिसंवननकर्मनिर्माणव्याप्त्या, तां प्रति विरक्तचेता नृपतिरिति नानाविधान् वैदेशिकान् कलाविदश्च पृच्छन्ती कस्यापि यथार्थवादिनः सत्यप्रत्ययस्य कार्मणकर्मणे किञ्चित्सिद्धयोगमासाद्य तत्प्रयोगावसरे[4] ।

मन्त्रमूलबलात्प्रीतिः पतिद्रोहोऽभिधीयते ।

इति वाक्यमनुस्मरन्ती सतीव तद्योगचूर्णं जलधौ न्यधत्त । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति तद्भेषजमाहात्म्याद्वशीकृतो वारिधिरेव मूर्तिमान् निशि तामुपेत्य रेमे । इत्थमकस्मादाधानवतीं प्रतीकैस्तद्विधैर्निर्णीय सकोपो भूपो यावत्तस्याः प्रवासादिदण्डं कमपि विमृशति

१ म्लेच्छाधिपतीनां P २ लभेत P ३ प्राचुर्यात्पतिसंवननकर्मनिर्माणव्याप्त्या P ४ प्रयोजनावसरे D

तावत्तस्याः सन्निहिते निधननिर्बन्धे प्रत्यक्षीभूय जलधिरधिष्ठातृदैवतमहमिति स्वं ज्ञापयन् मा भैषीरिति तामाश्वास्य प्रति नृपं प्राह ।

२१) विवाहयित्वा यः कन्यां कुलजां शीलमण्डिताम् ।
समदृष्ट्या न पश्येत स पापिष्ठतरः स्मृतः ॥

इति त्वामवज्ञाकारिणं प्रलयकालमुक्तमर्यादया सान्तःपुरपरीवारं मज्जयिष्यामीति [1]भयभ्रान्ताया अनुनयपराया अयं मदीय एव सूनुस्तदस्मै साम्राज्योचितां नव्यां भूमिमहं दास्यामीत्यभिधाय क्वचित् क्वचित् पयांस्यपहृत्यान्तरीयान् प्रादुश्चकार । तानि सर्वाण्यपि लोकेषु कौङ्कणानीति प्रसिद्धानि । इति कौङ्कणोत्पत्तिप्रबन्धः* ।

२० अथ पाटलीपुत्रपत्तने वराहनामा कश्चिद्ब्राह्मणाङ्गभूः आजन्मनिमित्तज्ञानश्रद्धालुर्दुर्गतत्वादसूनूरक्षितुं पशून् चारयन् क्वापि शिलातले लग्नमालिख्याकृततद्विसर्जनः प्रदोषकाले गृहमुपेतः । कृतसमयोचितकृत्यो निशीथकाले भोजनायोपविष्टो लग्नविसर्जनमनुस्मृत्य निरातङ्कवृत्त्या तत्र याति, तावत्तदुपरि पारीन्द्रमप्युपविष्टमवगणय्य तदुदराधोभागे पाणिं प्रक्षिप्य लग्नं विमृजन् सिंहरूपमपहाय प्रत्यक्षीभूय रविरेव वरं वृणु इत्युवाच । अथ समस्तनक्षत्रग्रहमण्डलं दर्शयेति वरं प्रार्थयमानः स्वविमानेऽधिरोप्य तत्रैव नीतो वत्सरान्ते यावद्ग्रहाणां वक्रातिचारोदयास्तमनादीन् भावान् प्रत्यक्षरूपान् परीक्ष्य पुनरिहायातो मिहिरप्रसादाद्वराहमिहिर इति प्रसिद्धाख्यः श्रीनन्दनृपतेः परमां मान्यतां दधानो वाराहीसंहितेति नवं ज्योतिःशास्त्रं रचयांचकार । अथ कदाचित्स निजपुत्रजन्मावसरे निजगृहे घटिकां निवेश्य तया शुद्धं जन्मकाललग्नं निर्णीय जातकग्रन्थप्रमाणेन ज्योतिश्चक्रे । स्वयं प्रत्यक्षीकृतग्रहचक्रज्ञानबलात्तस्य सूनोः संवत्सरशतप्रमाणमायुर्निर्णीतवान् । जन्ममहोत्सवे चैकं श्रीभद्रबाहुनामानं जैना-

---

१ भयभ्रान्ताया इत्यारभ्य दास्यामीत्यन्तं वाक्यं मु. पुस्तके नास्ति * कौङ्कणोत्पत्तिप्रबन्धोऽयं पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना लिखितम् ।

चार्यं कनीयांसं सोदरं विहाय नृपप्रभृतिकः स कोऽपि नास्ति य उपायनपाणिर्न जगाम। स निमित्तविज्जिनभक्ताय शकटालमन्त्रिणे तेषां सूरीणामनागमनकारणमुपालम्भगर्भितं जगौ। तेन ज्ञापितास्ते महात्मानः संपूर्णश्रुतज्ञानकरतलकलितामलकफलवत्कालत्रयास्तस्य शिशोर्विंशतितमे दिने बिडालान्मृत्युमुपदिशन्तो वयं नागता इति तेषामुपदेशे[1] वराहमिहिराय निवेदिते ततःप्रभृति निजकुटुम्बं तस्य शावस्यावश्यकीं तां विपदं निरोद्धुं बिडालरक्षायै शतश उपायान्कुर्वन्नपि निर्णीते दिने निशीथेऽकस्माद्बालमूर्ध्नि पतितयार्गलया स बालः परलोकमवाप। ततस्तच्छोकशङ्कुमुद्दिधीर्षवः श्रीभद्रबाहुगुरवो यावत्तद्गेहमायान्ति तावत्तद्गृहाङ्गणे समस्तनिमित्तशास्त्रपुस्तकान्येकत्र पिण्डीकृतानि सन्निहितदहनान्यालोक्य किमेतदिति पृष्टः सांवत्सरः समत्सरस्तान् जैनमुनीनुपालम्भयन् एतानि[2] संदेहकारीणि धक्ष्याम्येव यैरहमपि विप्रलब्धस्तेनेति सनिर्वेदमुदिते तैः श्रुतज्ञानबलात्तज्जन्मलग्नं सम्यक् तस्मै निवेद्य सूक्ष्मेक्षिकया तद्ग्रहबले ज्ञापिते विंशतिदिनान्येव भवन्ति। इत्थं विरक्तावपनीतायां स ज्योतिषिक इति जगौ। यद्भवद्भिर्बिडालान्मृत्युरुपदिष्टस्तदेव व्यभिचारीति तेनाभिहिते तत्रार्गलां तामानाय्य तत्रोत्कीर्णं बिडालं दर्शयन्तो भवितव्यताव्यत्ययः किं कदापि भवतीति महर्षिभिरभिदधे। कस्मात्[3] रुद्यते, गतः कः, परमार्णवोऽनपायाः[4], संस्थानविशेषनाशजन्मा शोकश्चेन्न कदापि मोहितव्यम्।

२२) अभावप्रभवैर्भावैर्मायाविभवभावितैः।
अभावनिष्ठपर्यन्तैः[5] सतां न क्रियते भ्रमः[6]॥

---

१ मुपदेशभूतां वाचं वराहमिहिराय निवेदितायां P २ एतानि रोहन्मोहसंदोहकारीणि H ३ कस्मान्न B ४ कायोऽयं परमाणवः B ५ अभावनिष्ठं पर्यन्ते P ६ तमः P

इत्युक्तियुक्तिभ्यां प्रबोध्य ते महर्षयः स्वं पदं भेजुः । इत्थं बोधितस्यापि तस्य मिथ्यात्वध्वान्तान्तरितस्य [1]कनकभ्रान्तिरिव तथात्राप्युन्मत्सरोच्छेकात्तद्भक्तानभिचारकर्मणा कांश्चन पीडयन् कांश्चन व्यापादयन् तद्वृत्तान्तं तेभ्यो ज्ञानातिशयादवधार्योपसर्गहरं पासमिति नूतनं स्तोत्रं रचयांचक्रुः । इति वराहमिहिरप्रबन्धः* ॥

२१ अथ ढङ्काभिधानभूभृति रणसिंहनामा राजपुत्रस्तन्नन्दनां भूपलनाम्नीं सौन्दर्यनिर्जितनागलोकबालामालोक्य जातानुरागतया तां सेवमानस्य तस्य वासुकेः सुतो नागार्जुननामा समजनि । तेन पाताल[2]पालेन सुतस्नेहमोहितमनसा सर्वासामप्यौषधीनां फलानि मूलानि दलानि च भोजितस्तत्प्रभावान्महासिद्धिभिरलंकृतः सिद्धपुरुषतया पृथ्वीं विगाहमानः शातवाहननृपतेः कलागुरुर्गरीयसीं प्रतिष्ठामुपागतोऽपि गगनगामिनीं विद्यामध्येतुं श्रीपादलिप्तपुरे पादलिप्ताचार्यान् सेवमानो मानोच्छ्रित[3]मतिर्भोजनावसरे पदे लेपप्रमाणेन गगनोत्पतितान् श्रीअष्टापदप्रभृतीनि तीर्थानि नमस्कृत्य तेषां स्वस्थानमुपेयुषां पादौ प्रक्षाल्य ज्ञातसप्तोत्तरशतसंख्यमहौषधीनामास्वादवर्णघ्राणादिभिर्निर्णीय च गुरूनवगणय्य कृतपदलेपः कृकवाकुकलापिवदुत्पत्यावटतटे निपतंश्च तद्व्रणश्रेणिजर्जरिताङ्गो गुरुभिः किमेतदित्यनुयुक्तो यथावद्वृत्तान्तं निवेदयन् तच्चातुर्यचमत्कृतचेतोभिस्तच्छिरसि पद्महस्तदानपूर्वकं षाष्टीकतन्दुलोदकेन तानि भेषजान्यभ्यञ्ज्य तत्पादलेपाद्गगनगामी भूया इति तदनुग्रहादेकां सिद्धिमासाद्य, श्रीपार्श्वनाथपुरतः साध्यमानो रसः समस्तस्त्रैणलक्षणोपलक्षितपतिव्रतवनितामर्द्यमानः कोटिवेधी भवतीति तन्मुखादाकर्ण्य च यत्पुरा समुद्रविजयदाशार्हेण त्रिकालवेदिनः श्रीनेमिनाथस्य मुखान्महातिशायि श्रुत्वा श्रीपार्श्वना-

---

१ धत्तुरितस्य कनकभ्रान्तिरिव तेषु मत्सरोच्छेकात्तद्भक्तान् H * अयं वराहमिहिरप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा, भाऊदाजीना लिखितम् । २ पातालप्यालेन H ३ व्रतमति P

थबिम्बं रत्नमयं निर्माप्य श्रीद्वारवत्यां प्रासादे न्यस्तं, द्वारवतीदाहानन्तरं समुद्रेण प्लावितायां तस्यां पुरि तत्र समुद्रे तस्मिन्बिम्बे तथैव विद्यमाने, कान्तीयसांयात्रिकस्य धनपतिनाम्नो यानपात्रे देवतातिशयात् स्खलिते, इह जिनबिम्बमस्तीति दिव्यवाचा निर्णीय, नाविकांस्तत्र प्रक्षिप्य सप्तसंख्यैरामतन्तुभिः सन्दानितमुद्धृत्य निजायां पुरि चिन्तातीतलाभात् स्वयंकृतप्रासादे न्यस्तवान् । तत्सर्वातिशायि बिम्बं नागार्जुनः स्वसिद्धरससिद्धयेऽपहृत्य, सेडीतटिन्यास्तटे तदेव विन्यस्य, तत्पुरतो रससाधनाय श्रीसातवाहनस्यैकपत्नीं चन्द्रलेखाभिधानां प्रतिनिशं सिद्धव्यन्तरसान्निध्यात्त्रानीय रसमर्दनं कारयति स्म । इत्थं भूयो भूयस्तत्र यातायाते सति, बन्धुबुद्ध्या सा नागार्जुनपार्श्वे तदौषधीनां मर्दनहेतुं पृच्छति, सोऽपि स्वकल्पनया कोटिवेधरसस्य यथावस्थितं वृत्तान्तं निवेदयन्, तस्याश्च वचनगोचरातीतं सत्कारं कुर्वाणोऽनन्यसामान्यसौजन्यं प्रवर्धयामास । अथ कदाचित्तया निजाङ्गजयोरस्मिन् वृत्तान्ते निवेदिते तौ तल्लुब्धौ राज्यं परित्यज्य नागार्जुनसमलंकृतां भुवमागतौ, कैतवेन तस्य रसस्य जिघृक्षया गुप्तवेषौ यत्र नागार्जुनो भुङ्क्ते तत्र तामर्थदानेन परितोष्य रसवार्तां पृच्छतः । सा च तज्जिज्ञासया तदर्थं सलवणां रसवतीं कुर्वन्ती षण्मास्यां व्यतीतायां तस्मिन् क्षारामिति रसवतीं दूषयति सति, इङ्गितैः सिद्धं रसमिति ताभ्यां निवेदितवती । अथ प्रतिपन्नभागिनेयाभ्यां रसग्रसनलालसाभ्यां वासुकिना निर्णीतदर्भाङ्कुरमृत्युरिति परम्परया ज्ञाततत्त्वाभ्यां तेनैव शस्त्रेण तथैव स निजघ्ने ।

स रसः संप्रेतिष्ठितत्वाद्दैवताधिष्ठानाच्च तिरोहितो बभूव । यत्र स रसःस्तम्भितस्तत्र स्तम्भनकाभिधानं श्रीपार्श्वनाथतीर्थं रसादप्यतिशायि सकललोकाभिलषितफलप्रदं । ततः कियता कालेन तद्बिम्बं वदनमात्र-

१ संप्रतिष्ठितदेवताधिष्ठानवशात् a D

वर्जं भूम्यन्तरितं बभूव। अथ श्रीशासनदेवतादेशात् षण्मासीं यावदाचाम्लानि निर्माय कठिनीप्रयोगेण नवाङ्गवृत्तौ निवृत्तायां श्रीअभयदेवसूरीणां वपुषि प्रादुर्भूते प्रभूतरोगे पातालपालः श्रीधरणेन्द्रनामा सितसर्परूपमास्थाय तद्वपुर्जिव्हया विलिह्य[1] प्रसह्य निरामयीकृत्य तत्तीर्थं श्रीमदभयदेवसूरीणामुपदिदेश। श्रीसंघेन सह समागतास्तत्र ते सूरयः प्रस्रवन्तीं सुरभिं विलोक्य गोपालबालैर्निवेदितायां भुवि नवं द्वात्रिंशतिकास्तवं कुर्वन्तस्त्रिंशत्तमवृत्तेन तत्र श्रीपार्श्वनाथबिम्बं प्रादुश्चक्रुः। देवतादेशेन तद्वृत्तं गोप्यमेव निर्ममे॥

२३) यन्मार्गे[2]ऽपि चतुःसहस्रशरदो देवालये योऽर्चितः
स्वामी वासववासुदेववरुणैः स्वावास[3]मध्ये ततः।
कान्त्यामिभ्यधनेश्वरेण महता नागार्जुनेनार्चितैः
पायात्स्तम्भनके पुरे स भवतः श्रीपार्श्वनाथो जिनः॥

**इति नागार्जुनोत्पत्तिस्तम्भनकतीर्थावतारप्रबन्धौ* ॥**

**२२** अथावन्त्यां पुरि कश्चिद्विप्रः पाणिनिव्याकरणोपाध्यायतां कुर्वाणः सिप्रासरित्प्रान्तवर्तिचिन्तामणिगणेशप्रणामगृहीताभिग्रहः छात्रैः फक्किकाव्याख्यानप्रश्नादिभिरुद्वेजितः कदाचित् प्रावृषि तस्याः सरितःपूरे प्रसर्पति कृतझम्पापातो दैवात् संघटितवृक्षस्तन्मूले करावलम्बनस्तरीमासाद्य प्रत्यक्षं परशुपाणिं प्रणमन् तेन तत्साहस[5]तुष्टेन वरं वृणीष्वेत्यादिष्टः पाणिनिव्याकरणस्योपदेशं प्रार्थयमानस्तेन तथेति प्रतिपद्य खटिकार्पणपूर्वं[6] प्रतिदिनं व्याकरणे व्याख्यायमाने षण्मासपर्यन्ते व्याकरणे समर्थिते सति लम्बोदरं निर्विलम्बमनुज्ञाप्य प्रथमादर्शं सहादाय[7] तां पुरीं प्रविश्य स्थण्डिले कस्यापि पुरस्य निषण्ण एव सुष्वाप। ततः प्रत्यूषे प्रेष्याभिस्तं तथाव-

---

१ लेलिह्य a  २ जन्माग्रे a H  ३ यो वर्द्धिमध्ये H  ४ अञ्चितः C
५ तत्साहसानुष्ठानेन P  ६ षष्टिकार्पणपूर्वं a  ७ सहादीयतां a  * नागार्ज्जुनोत्पत्तिस्तम्भनकतीर्थावतारप्रबन्धौ पुस्तकान्तरे नोपलभ्येते इति डा. भाउदाजीना लिखितम्.

स्थितं प्राप्य विपणिरमणी तद्वृत्तान्तं ज्ञापिता सती ताभिरेव समानीय प्रेङ्खोलपल्यङ्के मुक्तः । अहोरात्रत्रयान्ते किञ्चित्त्यक्तनिद्रश्चित्रशालादिचित्रं चित्रकारि पश्यन् स्वर्लोकसमुत्पन्नमात्मानं मन्यमानस्तया पणहरिणीदृशा ज्ञापितवृत्तान्तः स्नानपानभोजनादिभिर्भक्तिभिः परितोषितो नृपसभायां समुपेतः पाणिनिव्याकरणं यथावस्थितं व्याचक्षाणो नृपप्रभृतिपण्डितैरशेषैः सत्क्रियमाणस्तदुपात्तं सर्वस्वं तस्यै समर्पयामास ।

अथ तस्य क्रमेण चतुर्णां वर्णानां स्त्रियश्चतस्रः प्रिया अभवन् । तथा क्षत्रियाङ्गजः श्रीविक्रमार्कः, शूद्रीसुतो भर्तृहरिः स हीनजातित्वात् भूमिगृहस्थो गुप्तवृत्त्याध्याप्यते । अपरे त्रयः प्रत्यक्षाः पाठ्यन्ते एवं भर्तृहरिसंकेतेन तेषामध्याप्यमानानां—

२४) दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।

इति पाठ्यमाने भर्तृहरिरज्जुसंकेतेऽसंजायमाने प्रत्यक्षच्छात्रैस्त्रिभिरुत्तरार्धे पृच्छ्यमाने कुपिते उपाध्याय (स्तेन)रे वेश्यासुत अद्यापि रज्जुसंकेतं न कुरुषे इत्याक्रुष्टः प्रत्यक्षीभूय शास्त्रकारं निन्दन् ।

२५) आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥

इति पाठाद्वित्तस्यैकामेव गतिं मेने । तेन भर्तृहरिणा वैराग्यशतकादिप्रबन्धा भूयांसश्चक्रिरे । इति भर्तृहर्युत्पत्तिप्रबन्धः* ।

**२३** अथ श्रीधारायां मालवमण्डनस्य श्रीभोजराजस्यायुर्वेदवेदी कश्चित् वाग्भटनामायुर्वेदोदितानि कुपथ्यानि विधाय तत्प्रभावात् रोगान् प्रादुः-

---

१ प्रेक्ष्य D २ तं वृत्तान्तं ज्ञापिता a c ३ भर्तृहरः नृहरः a ४ यो न ददाति न भुंक्ते तस्य तृतीयागतिर्भवति ॥ इत्युत्तरार्धोपेतः श्लोकोऽयं भतृहरिशतके दृश्यते ५ भर्तृहरी रज्जु P ६ कुपितः उपाध्यायं P ७ आक्रुषन् P ८ भर्तृहरिरज्जुसंकेतं न कुरुषे इत्यादिष्टः स प्रत्यक्षीभूय धरासुकारं a * अयं भर्तृहर्युत्पत्तिप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीना लिखितम् ।

कृत्य पुनस्तन्निग्रहाय सुश्रुतविश्रुतैर्भेषजैः पथ्यैश्च तान्निगृह्य नीरमन्तरेण कियत्कालं जीव्यत इति परीक्षार्थं तत्परिहृत्य दिनत्रयान्ते पिपासापीडिततताल्वोष्ठपुट इत्यपाठीत्—

२६) क्वचिदुष्णं क्वचिच्छीतं क्वचित्क्वथितशीतलम् ।
क्वचिद्भेषजसंयुक्तं वारि क्वापि न वारितम् ॥

इति वारिसत्कारकारि वाक्यमिदमपाठीत् । तेन निजानुभूतो[1] वाग्भटनामा प्रबन्धश्चक्रे । तस्य जामातापि लघुबाहडः श्वसुरेण बृहद्वाहडेन सह राजमन्दिरे प्रयातः प्रत्यूषकाले श्रीभोजस्य शरीरचेष्टितं[2] विलोक्य बृहद्बाहडेनाद्य नीरुजो यूयमित्युक्ते लघोर्मुखभङ्गं विलोक्य श्रीभोजेन कारणं पृष्टः स स्वामिनः शरीरेऽद्य निशाशेषे कृष्णच्छायाप्रवेशसूचितो राजयक्ष्मणः प्रवेशोऽभूदिति दैवतादेशेनातीन्द्रियं[3] भावं विज्ञपयन्, तत्कलाकलापचमत्कृतेन राज्ञा तस्य व्याधेः प्रतीकारतयानुयुक्तः लक्षत्रयमूल्यं रसायनं निवेदयन्, षड्भिर्मासैस्तावता द्रव्यव्ययेन परमादरेण च तस्मिन् रसायने सिद्धे, प्रदोषसमये तद्रसायनं काचमये कुम्पके न्यस्य नरेन्द्रपल्यङ्के निधाय प्रत्यूषे देवतार्चनानन्तरं तद्रसायनमत्तुमिच्छुः रसायनपूजावर्धापनादनु सज्जीकृतायां समग्रसामग्र्यां स लघुरगदंकारी केनापि कारणेन तं काचकुम्पकं भूमावास्फाल्य बभञ्ज । आः किमेतदिति राज्ञोक्ते रसायनपरिमलादेव पलायिते[4] व्याधौ व्याधेरभावाद्धातुक्षयकारिणानेन वृथा स्थापितेनालं, यदद्य शर्वरीविरामे सति सा पूर्वोक्ता कृष्णा छाया प्रभोर्वपुरपास्य दूरं गतैव ददृशे इत्यर्थे देवः प्रमाणमिति तदीयसत्यप्रत्ययेन परितोषितो राजा दारिद्र्यद्रोहि पारितोषिकं प्रसादीचकार ॥

१ निजानुभूते a २ शरीरेङ्गितं a ३ दैवतातिशयेन a आत्मीयभावं b
४ पलायमाने D

अथ ते सर्वव्याधयस्तेन चिकित्सकेन[1] भूतलादुच्छेदिताः स्वर्लोकेऽश्विनीकुमारवैद्ययोः स्वपराभवं निजगदुः । अथ तौ तया प्रवृत्त्या चित्रीयमाणमानसौ नीलवर्णविहङ्गमयुग्मीभूय व्याधिप्रतिभटस्य वाग्भटस्य धवलगृहवातायनतले वलभ्यां निविष्टौ कोऽरुक् शब्दं चक्रतुः । ततः स आयुर्वेदवेदी नेदीयांसं तदीयशब्दं साभिप्रायं चेतसि चिरं विचिन्त्य ।

२७) अशाकभोजी घृतमत्ति योन्धसा
पयोरसान् शीलति नात्ति योऽम्भसा ।
अभुक् विभुक् नापक्तां विदाहिनां[2]
चलत्प्रभुक् जीर्णभुगल्पसारभुक् ॥

इत्यभाणि । भणितानन्तरं चमत्कृतचित्तौ तौ प्रयातौ । पुनर्द्वितीयदिने द्वितीयवेलायां तादृक्पक्षिरूपं विधाय प्राक्तनशब्दरूपं कुर्वाणौ समायातौ वैद्यगृहे पुनस्तयोर्वचः प्रतिवचः ।

२८) वर्षासु यस्तिष्ठति, शरदि पिबति, हेमन्तशिशिरयोरत्ति ।
माद्यति मधुनि, ग्रीष्मे स्वपिति, भवति च खग सोऽरुक् ॥

इति भणितानन्तरं पुनरेव गतौ । तृतीयदिने योगीन्द्ररूपं कृत्वा तद्गृहे समागतौ तयोर्वचः ।

२९) अभूमिजमनाकाशमहन्तव्यमवारिजम् ।
सम्मतं सर्वशास्त्राणां वद वैद्य किमौषधम् ॥

पुनर्वैद्यवचः

३०) अभूमिजमनाकाशं पथ्यं रसविवर्जितम् ।
पूर्वाचार्यैः समाख्यातं लङ्घनं परमौषधम् ॥

१ चिकित्सितेन P २ आमुक् विरुट् नावकृतां a अभुक् विरुद् वातकृतां H

तेन[1] चमत्कृतचित्तौ वैद्यौ प्रत्यक्षीभूय यथाभिमतं वरं वितीर्य स्वस्थानं भेजतुः। इति वैद्यवाग्भटप्रबन्धः*।

२४ अथ धामणउलिग्रामवास्तव्यो[2] धाराभिधानः कोपि नैगमः श्रिया वैश्रमणस्पर्धिष्णुः संघाधिपत्यमासाद्य माद्यद्[3]द्रविणव्ययव्यतिकरजीवितजीवलोकः पञ्चभिरङ्गजैः समं श्रीरैवताचलोपत्यकायां विहितावासःदिगम्बरभक्तेन केनापि गिरिनगरराजेन सिताम्बरभक्त इति स स्खल्यमानस्तद्द्वयोः सैन्ययोः समरसंरम्भे प्रवर्तमाने सति, अमानेन रणरसेन[4] युध्यमाना देवभक्त्या वल्लभतया प्रोत्साहितसाहसा विपद्य ते पञ्चपुत्राः पञ्चापि क्षेत्रपतयो बभूवुः। तेषां क्रमेण नामानि। १ कालमेघः २ मेघनादः ३ भैरवः ४ एकपदः ५ त्रैलोक्यपादः इति बभूवुः। तीर्थप्रत्यनीकं पञ्चतां नयन्तस्ते पञ्चापि गिरेः परितो विजयन्ते स्म। अथ तत्पिता धाराभिधान एक एवावशिष्टः कन्यकुब्जदेशे गत्वा श्रीबप्पभट्टि[5]सूरीणां व्याख्याक्षणप्रक्रमे श्रीसंघस्याज्ञां दत्तवान् यद्रैवतकतीर्थे दिगम्बराः कृतवसतयः सिताम्बरान् पाखण्डिरूपान् परिकल्प्य पर्वताधिरूढान्नेच्छ[6]न्ति अतस्तान् निर्जित्य तीर्थोद्धारं कृत्वा निजदर्शनप्रतिष्ठापरैर्व्याख्याक्षणो विधेय इति तद्वचनेन्धनप्रोज्ज्वलितप्रतीपज्वलनां[7] नृपतिं सहादाय तेन समं तां भूधरधरामवाप्य सप्तभिर्दिनैर्वादस्थलेन दिगम्बरान् पराजित्य श्रीसंघसमक्षं श्रीअम्बिकां प्रत्यक्षीकृत्य एक्कोवि नमुक्कारो उज्जन्तसेलसिहरे इत्यादितदुक्तां गाथामाकर्ण्य सिताम्बरदर्शने स्थापिते सति पराभूता दिग्वसना बलानकमण्डपात् झम्पापातं वितेनुरिति क्षेत्राधिपत्युत्पत्तिप्रबन्धः+॥

---

१ तेन निजाभिप्रायसदृशप्रत्युत्तरदानेन a H * अयं वैद्यवाग्भटप्रबंधः पुस्तकान्तरे नोपलभ्यते २ धारणउलिग्रामे वास्तव्यो a ३ मासाद्यलद् द्रविण a ४ मरणरसेन a ५ बप्पहट्टि M P ६ पर्वतेऽधिरोढुं न ददति H ७ प्रतिघज्वलना:C

+ अयं क्षेत्राधिपत्युत्पत्तिप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीशर्मभिर्लिखितम्।

२५ अथ कदाचिद्भवान्या भव इति पृष्टः, यत्त्वं कियतां कार्पटिकानां राज्यं ददासीति तद्वाक्यादनु यो लक्षसंख्यानामपि एक एव वासनापरस्तस्य वै राज्यमहं वितरामीति प्रत्ययदर्शनाय गौरीं पङ्कमग्नां जरद्गवीं विधाय स्वयं नररूपेण तटस्थः पान्थांस्तामुद्धर्तुमाकारयन् तैरासन्नसोमेश्वरदर्शनोत्कैरुपहस्यमानः केनापि कृपावता पथिकवृन्देन तस्यामुद्धर्तुमारब्धायां सिंहरूपेण शिव एव तान् त्रासयन् कश्चिदेक एव पथिको मृत्युमप्याहत्य तस्या गोः समीपं नोज्झीत् स एव राज्यार्ह इति पृथक् गौर्या दर्शित इति **वासनाप्रबन्धः**× ।

२६ अथ कश्चित्कार्पटिकः सोमेश्वरयात्रायां व्रजन् पथि लोहकारौकसि प्रसुप्तः । तस्य लोहकारस्य भार्या पतिं निहत्य कृपाणिकां कार्पटिकशीर्षे निदधती बुम्बारवमकरोत् । आरक्षकेण तत्रागत्य तस्यापराधिनः करौ छिन्नौ स देवस्योपालम्भनपरः निशि प्रत्यक्षीभूयेत्युक्तः । शृणु त्वं प्राग्भवे कदाचिदजा केनापि एकेन सोदरेण पाणिभ्यां श्रवणयोर्धृता तदपरेण मारिता, ततः सा अजा मृत्वा इयं योषिदजनि येन व्यापादिता स साम्प्रतं पतिरभूत् यत्त्वया तदा कर्णौ विधृतौ तदा तव समागमे जाते सति करौ छिन्नौ तदा कथं ममोपालम्भ इति **कृपाणिकाप्रबन्धः*** ।

२७ पुरा शङ्खपुरनगरे श्रीशङ्खो नाम नृपतिस्तत्र नामकर्मभ्यां धनदः श्रेष्ठी स कदाचित्करिकर्णतालतरलां कमलां विमृश्योपायनपाणिर्नृपोपान्तमुपेत्य तं परितोष्य च तत्प्रसादीकृतायां भुवि चतुर्भिर्नन्दनैः सह समालोच्य सुलग्ने जैनप्रासादमचीकरत् । तत्र प्रतिष्ठितबिम्बानां स्थापनां विधाय

---

× एष वासनाप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउ दाजीशर्मभिर्लिखितम्. १ त्वया प्राग्भवे P

* अयं कृपाणिकाप्रबन्धः पुस्तकान्तरे नोपलभ्यते २ कथाकोषेऽपीयं कथा वर्तते

तस्य प्रासादस्य समारचनाय बहून्यायद्वाराणि रचयन् तत्सपर्याकुलतया नानाविधकुसुमवृक्षावलीसमलंकृतमभिराममारामं च निर्माप्य तच्चिन्तकेषु नियुक्तेषु उदिते प्राक्तनान्तरायकर्मणि क्रमात् संह्रियमाणसंपद्धमर्णतया तत्र मानम्लानिमाकलय्यानतिदूरवर्तिनि क्वापि ग्रामे कृतवसतिर्नगरयातायातेन सुतोपात्तजीविकः कियन्तमपि कालमतिवाहितवान् । अथान्यस्मिन्नवसरे सन्निहिते चातुर्मासिकपर्वणि तत्र यायिभिः सुतैः समं स धनदः शङ्खपुरं प्राप्य निजप्रासादसोपानमधिरोहन् निजारामपुष्पलाविकयोपायनीकृतपुष्पचतुःसरिकः परमानन्दनिर्भरस्ताभिर्जिनेन्द्रमभ्यर्च्य निशि गुरूणां पुरः स्वं दौस्थ्यममन्दं निन्दन् तैः प्रदत्तकपर्दियक्षाकृष्टिमन्त्रोऽन्यदा कृष्णचतुर्दशीनिशीथे तमेव मन्त्रमाराधयन् प्रत्यक्षीकृतात् कपर्दियक्षात् गुरूपदेशतश्चतुर्मासकावसरे पुष्पचतुःसरिकपूजापुण्यफलं देहीति प्रार्थयन् एकस्यापि पूजाकुसुमस्य पुण्यफलं सर्वज्ञेन विना नाहं वितरीतुं प्रभूष्णुरिति किंतु कपर्दियक्षस्तस्य साधर्मिकस्यातुल्यवात्सल्यसम्बन्धे तद्धाम्नि[1] चतुर्षु कोणेषु सुवर्णपूर्णान् चतुरः कलशान् निधीकृत्य तिरोदधे । स प्रातः स्वसद्मनि समागतः धर्मदानपराणां[2] नन्दनानां तद्द्रव्यं समर्थयामास । तेऽपि निर्बन्धात् पितुः पार्श्वे तद्वैभवलाभहेतुं पृच्छन्तस्तेषां हृदि धर्मप्रभावाविर्भावाय जिनपूजाप्रभावतः परितुष्टेन कपर्दियक्षेण प्रसादीकृतां तां संपदं निवेदयामास । तेऽपि संपन्नसंपत्तयस्तदेव जन्मनगरं समाश्रित्य निजधर्मस्थानसमारचनपराः जिनशासनप्रभावनां विविधां कुर्वन्तो वैधर्मिकाणामपि मनस्सु जिनधर्मं निश्चलीचक्रुरिति श्रीवीतरागपूजायां **धनदप्रबन्धः**+ ।

इत्याचार्यश्रीमेरुतुङ्गाविःकृते प्रबन्धचिन्तामणौ विक्रमादित्याद्युदितपात्रविवेचनप्रमुखजिनपूजायां धनदप्रबन्धपर्यन्तवर्णनो नाम प्रकीर्णकाभिधानः पञ्चमः प्रकाशः समर्थितः ॥ ग्रंन्थाग्रं ३०००.

---

१ तद्धाम्निश्चतुः D २ धर्मनिन्दापराणां H

+ अयं धनदप्रबन्धः पुस्तकान्तरे नोपलभ्यते इति डा. भाउदाजीशर्मभिर्लिखितम्

३१) दुःप्रापेषु बहुश्रुतेषु गुणवद्वृद्धेषु च प्रायशः
शिष्याणां प्रतिभाभियोगविगमादुच्चैःश्रुते सीदति ।
प्राज्ञानामथ भाविनामुपकृतिं कर्तुं परामिच्छता
ग्रन्थः सत्पुरुषप्रबन्धघटनाच्चक्रे सुधासत्रवत् ॥ १ ॥

३२) प्रबन्धानां चिन्तामणिरयमुपात्तः करतले
स्यमन्तस्य भ्रान्तिं रचयति चिरायोपनिहितः ।
हृदि न्यस्तः शस्तां सृजति विमलां कौस्तुभकलां
तदेतस्माद्ग्रन्थाद्भवति विबुधः श्रीपतिरिव ॥ २ ॥

३३) यथा श्रुतं संकलितः प्रबन्धै—
र्ग्रन्थो मया मन्दधियापि यत्नात् ।
मात्सर्यमुत्सार्य सुधीभिरेव
प्रज्ञोद्धुरैरुन्नतिमेव नेयः—- ॥ ३ ॥

यावद्दिवि कितवाविव रविशशिनौ क्रीडतो ग्रहकपर्दैः ।
ग्रन्थस्तावन्नन्दतु सूरिभिरुपदिश्यमानोऽयम् ॥ ४ ॥

नृपश्रीविक्रमकालातीतसंवत् १३६१ वर्षे फाल्गुनसुदि १५ रवावद्येह श्रीवर्धमानपुरे चिन्तामणिग्रन्थः समाप्तः ॥

---

१ त्रयोदशस्वब्दशतेषु चैक-
षष्ट्याधिकेषु क्रमतो गतेषु ।
वैशाखमासस्य च पूर्णिमायां
ग्रन्थः समाप्तिं गमितो मितोऽयम् ॥ ४

## प्रबन्धचिन्तामणिस्थश्लोकानामकाराद्यनुक्रमः ॥

—:०:—

## ॥ प्राकृतशब्दानामकाराद्यनुक्रमः ॥

# नरनगनगरनद्यादिविशेषनाम्नामनुक्रमः ।

## શ્રી ફાર્બસ ગુજરાતી સભાની માલીકીનાં પુસ્તકો

૧–૨ રાસમાળા ( સચિત્ર ) તૃતીય આવૃત્તિ, ભાગ ૧ લો, તથા બીજો; રચનાર સ્વ. શ્રી. એલેક્ઝાન્ડર કિન્લોક ફાર્બસ ભાષાન્તરકાર દિ. બ. રણછોડભાઈ ઉદયરામ દવે. દરેકનું મૂલ્ય રૂ. ૫–૮–૦.

૪ માર્કસ ઓરેલીઅસ એન્ટોનીનસના સુવિચારો—ભાષાન્તરકાર, ઈડરનરેશ સ્વ. સર કેશરીસિંહજી; રા. રા. નગીનદાસ પુ. સંઘવીએ સંગ્રહેલાં સંસ્કૃત સુભાષિત અને તત્ત્વજ્ઞાનનાં વચનો સાથે. મૂલ્ય રૂ.૨–૦–૦.

૫–૬ શ્રી ફાર્બસ ગુજરાતી સભાનાં હસ્તલિખિત પુસ્તકોની સવિસ્તર નામાવલિ, ભાગ ૧ લો, તથા ભાગ ૨ જો; તૈયાર કરનાર રા. રા. અંબાલાલ બુ. જાની, બી. એ., દરેકનું મૂલ્ય રૂ. ૨–૦–૦.

૭ ગુજરાતનાં ઐતિહાસિક સાધનો ભાગ ૧–૨ ( સાથે ભેગા ) તૈયાર કરનાર રા. રા. નર્મદાશંકર વલ્લભજી દ્વિવેદી; મૂલ્ય રૂ. ૧–૦–૦.

૮ રસકલ્લોલ : બાળાઓએ ગાવાનાં સ્ત્રીજીવનનાં ગીતો: સંપાદક રા. રા. છગનલાલ વિ. રાવળ, રૂ. ૦–૧૦–૦.

૯ પ્રબોધબત્રીશી ( કવિ શ્રી માંડણકૃત ) અને રાવણમંદોદરીસંવાદ ( કવિ શ્રીધરકૃત ) ટીકાસાથે સંશોધક સ્વ. રા. મણિલાલ બ. વ્યાસ, મૂલ્ય રૂ. ૦–૧૨–૦

૧૦ પ્રાચીન કાવ્યવિનોદ ભાગ ૧ લો-પ્રાચીન આખ્યાનો અને પદો: સંપાદક રા. રા. છગનલાલ વિ. રાવળ, મૂલ્ય રૂ.૧–૦–૦.

૧૧ અહુનવર–પારસી ધર્મ તત્ત્વનું વૈદિક દષ્ટિએ અવલોકન રા. રા. માનશંકર પીતાંબરદાસ મહેતા. રૂ. ૦–૮–૦.

१२ चतुर्विंशतिप्रबन्धः— परिशिष्टेन समलङ्कृतः प्रो. हीरालालेन । मूल्यं रु. २–८–०

१३ प्रबन्धचिन्तामणिः–शास्त्री दुर्गाशङ्करेण संशोधितः । मूल्यं १–८–०.

૧૪ શાક્તસંપ્રદાય— સિદ્ધાન્તો પ્રચાર અને ગુજરાતી સાહિત્ય ઉપર અસર. કાદિ અને હાદિ મતનાં બે શ્રીચક્રો સાથે. લે. દિ. બ. નર્મદાશંકર દે. મહેતા. બી. એ. મૂલ્ય ૧–૮–૦.



